॥ ओम् ॥

# ॥ अद्वैतमार्त्तण्डः ॥

श्रीमत्परमहंस परिव्राजकाचार्य दाक्षिणात्य

## श्रीब्रह्मानन्दतीर्थ स्वामि विरचितः

जम्बूनगरवर्ति श्रीरघुनाथमन्दिरीय पाठशालाध्यापक

श्रीगङ्गाधरशास्त्रिभिः संगृहीत

टिप्पणीसंवलितः

श्रीमतावर्णाश्रमधर्मरक्षणजागरूकेण विद्वज्जननयननलिनतरणिना सर्वविद्याकोविदेन भुजबलाक्रान्तपरिपन्थिना रघुवंशमुक्तामणिना पूर्वोक्तश्रीस्वामिपादानांशिष्येण जम्बूकश्मीरतिब्बताद्यनेक देशाधीश्वरेण इन्द्रमहेन्द्रश्री १०८ श्रीमहाराजाधिराज श्रीप्रतापसिंहवर्मणा स्वगुरुस्वामिकृतानुज्ञया मुमुक्षुजनेभ्यो वितरीतुं




जम्बूनगरवर्तिनि स्वकीये रणवीरप्रकाशनामनि यन्त्रालये तदधिकार्यालमचन्दद्वारा मुद्रयित्वाप्रकाशंनीतः ॥

विक्रमार्कराज्यात्संवत् १९५६ फाल्गुन०

प्रथमावृत्ति १०००

Printed at the "Ranbir Prakash Press," Jammu, by DIWAN ALIM CHAND, G.C., Superintendent.

## ( भूमिका )

यत्पादस्मृतिमात्रमत्रभजतांविघ्नौघभङ्गक्षमं ।
यद्ध्यानंद्रुरवापमप्यभिमतंद्राक्दातुमीष्टेतमां ॥
सश्रीसोमशिवाङ्कगोदिनकृतांलक्षैःसदक्षंदध ।
त्तेजःश्रीगणपःप्रसीदतुतमामारब्धपूर्त्यैमम ॥ १ ॥

इहखलुकश्चिद्दाक्षिणात्यःश्रीमत्परमहंसपरिव्राजकाचार्य्यःश्रीब्र ह्मानन्दतीर्थाभिधःकाशीप्रयागहरिद्वारगङ्गोत्पत्तिकेदारबदरिकाश्र मादिषुतीर्थक्षेत्रेषु परिभ्रमन् नित्यनैमित्तिकाश्रमधर्मान्यथायोग्य मनुष्ठानेनालङ्कुर्वन् परंपराप्राप्तगुरूपदिष्टपथेन योगमभ्यस्यन् सतांमनसि सद्धर्मविश्रम्भमुत्पादयन् कृतार्थयँल्लोकलोचनानि पाय यन्नुपदेशामृतमधिकारिणो जनानत्यवाहयन् महीयासमनेहसं, येनखलु सकलशास्त्रमर्मज्ञेन मध्येमध्ये क्वचित्क्वचिच्चिरवासमार चयता भूमिवासिनामप्यस्तुकल्पपादपसंपत्सौख्यमितिकामनयैव भुक्तिमुक्तिमहासौधघण्टापथायमानाः प्राणायिषत निबन्धकल्प पादपाः वेदान्ते तन्त्रेच, तत्र श्रीशङ्कराचार्य्यमतानुरोधिनीशा रीरकसूत्रवृत्तिःप्रथमः, तद्विरोधिवेदान्तज्ञंमन्यविशिष्टाद्वैतवादिरा मानुजभाष्यसंभावित भ्रमशमकतद्दूषणशतावेदकोमामहेश्वरकृत विरोधवरूथिन्याख्यग्रन्थव्याख्यानं जयलक्ष्मीसंज्ञं द्वितीयः, द्वैत वादिमतोपमर्द्दनकरस्तार्किकमोहप्रकाशाख्यस्तृतीयः, आधुनिक दयानन्दमताभिमर्दको दयानन्दमोहप्रकाशाख्यश्चतुर्थः, आत्म ज्ञानोपायेषु मुख्याया अन्तःकरणशुद्धेः शास्त्रार्थश्रद्धायाश्च प्रथ मोपायं लोकप्रमादाद्विस्मृतविशेषं देवतोपासनापथंप्रदर्शयितुं श्रीभुवनेश्वरीतिलकाभिधःपंचमः, सोयं हाथरसग्रामवासिनः स त्सङ्गसच्छास्त्रविचारोपजातदेवतोपासनाभिलाषया स्वशिष्यतामु पगतस्य वैराग्यप्रकर्षमारूढस्य तीर्थचारिणो गौडस्य श्रीगणे शानन्दब्रह्मचारिणो मुखाज्जातुशुश्राव यदस्ति नेपालदेशान्तर्ग

ते नेपालगंजनामकधूमशकटस्थानात् दिनाष्टकगम्यवर्त्मगमनप्राप्ये देवलोकाभिधाने साम्प्रतं तदपभ्रंशेन देलकशब्देन लोकैर्व्यवह्रियमाणे नगरे उत्तरतःक्रोशषट्काभ्यन्तरे एव उदक्संस्थे परस्परं क्रोशगव्यूत्यन्तराले मनोज्ञप्रासादमण्डिते स्थानत्रये श्रीनाभिपादुकानामभिः कीर्तिते ऽनवरतं प्रज्वलज्ज्वालारूपेण प्रत्यक्षा मुमुक्षुबुभुक्षुजनैरुपास्यमाना भगवती साक्षादनुभूयमानमाहात्म्या, तदर्हन्तितत्र भवन्तोभवन्तस्तद्दर्शनव्याजेन तत्रत्यान्कृतार्थयितुमिति, श्रुत्वाच जाततद्दर्शनस्पृहस्सहानेन देलकनगरमवाप्य कृतभगवतीदर्शनाराधनो विरक्तजनेषु पुण्यपरिपाकेण श्रद्धालुना क्षत्रियधर्म्मेणेवसाक्षाद्गृहीतविग्रहेण वेदान्तश्रवणरसिकेन क्षत्रियकुलप्रदीपेन निखिलप्रधानजनसंमाननीयप्रधानपुरुषेण कमाण्डरकर्नैलोपाधिभाजा थापोपजातिकेन केसरिसिंहवर्म्मणा चिंतामणिरिव दुर्विधेन लब्धदर्शनस्तेनैव महापुरुषसेवया स्वजनिं सफलयितुं भूयोर्थ्यमानो निरपेक्षोपि तदाग्रहवशात्तन्निर्दिष्टे तदीयउद्याने विमले रम्यजले कांश्चिद्दिवसान्वासमूरीचकार, वसंश्चतत्रैवकेसरिसिंहस्यात्मजेषु दिल्लीशमशेर प्रेमशमशेर केदारशमशेर डंबरशमशेरादिनामभृत्सु केसरिसिंहोपकण्ठेवसद्भ्यां कारणगुणाःकार्य्येसंक्रामन्तीतिन्यायेन पितृसन्निभधर्मविश्रम्भशालिभ्यां प्रेमशमशेर केदारशमशेराभ्यां सेव्यमानः समययापनस्यावन्ध्यत्वाय मुमुक्षूणामनाद्यविद्योच्छेदक्षमससाधनवेदान्ततत्वार्थज्ञापनायानतिविस्तृतमनतिसंक्षिप्तमल्पश्रमेणापिशक्यमधिगन्तुमद्वैतमार्त्तण्डाभिधंप्रापैपीद्ग्रन्थरत्नं, ततश्च तत्रत्यानांव्याख्यानसापेक्षाणां नानोपनिषत्पठितानामुपनिषद्वाक्यानां नानास्मृतिगतानां स्मृतिवाक्यानां सूत्राणांच समूलताप्रत्यायनाय तदर्थज्ञानायच तत्तदाकरस्थानसविशेषनिर्देशपूर्वकं प्रतनतद्व्याख्याकारकृताव्याख्याःतद्व्याख्यानामतत्कर्तॄनामान्यतरनिर्देशोत्तरमलिखत्, अनुपलब्धप्रतनव्याख्यानितुतानियथासंप्रदायंव्यवृणोच्चैतद्ग्रन्थसौष्ठवदर्शनतत्कर्तृमाहात्म्यवशंवदःश्रीमन्महाराजमान्यःश्रीरघुनाथमन्दिरवर्त्तिराजकीयपाठशालाध्यक्षः पदवाक्यप्रमाणपारावारीणः श्रीगङ्गाधरशास्त्री जम्बूराजधानीवास्तव्यः, तथात्र मूलग्रन्थे याःश्रुतयो दाक्षिणा

ख्यानांपाठानुरोधेन तैलङ्गाक्षरमुद्रिताष्टोत्तरशतसंख्योपनिषद्भ्यो लिखिताः आसुच कलकत्तामुद्रितेभ्यः क्वचित्क्वचित्पाठभेद उपलभ्यते ससर्वोऽपिपाठभेदः तत्तच्छाखाध्यापकैरष्टोत्तरशतोपनिषदध्यापकैश्च तत्तद्देशनिवासिभिशिशष्टैराद्दतत्वादुपादेयएव, यथातैत्तिरीयारण्यकस्थयाज्ञिकीयमहानारायणोपनिषत्पाठसम्प्रदायः द्राविडानां चतुषष्ठ्यनुवाकपाठः, आन्ध्राणामशीत्यनुवाकपाठः, अपरेषां नवाशीत्यनुवाकपाठः, इतिदेशविशेषेषु बहुविधउपलभ्यमानः पाठभेदः सर्वोऽपि प्रामाणिकैशिशष्टैरुपादीयते तद्वत् ॥

अथनिष्पन्नंचामुंसटिप्पणिकं रामलालनाम्ना जम्बूमहाराजाश्रित जगदीश्वरपण्डितशिष्येण स्वयंसाधुसंलिख्य मुद्रणयोग्यतामापादितं ग्रन्थं मुमुक्षुजनहिताय तेभ्यो वितरीतुं जम्बूसंज्ञस्वराजधानीस्थे स्वकीये श्रीरणवीरप्रकाशनाम्नि यन्त्रे मुम्बईसीसकाक्षरैः स्वव्ययेनसंमुद्य प्रकाशितवानेतद्ग्रन्थकृद्भ्यः पूर्वोक्तश्रीस्वामिपादेभ्यआदायतच्छिष्यः श्री १०८ श्रीमान् वर्णाश्रमधर्मरक्षणप्रवणदक्षिणधिषणोऽनल्पदानजितकल्पपादपो रघुवंशभूषणायमानो दिलीपसगराद्युपम श्रीयुतश्रीरणवीरसिंहमहाराजज्येष्ठात्मजो भुजबलनमितसामन्तमण्डलः सर्वशास्त्ररहस्यपारदृश्वा जम्बूकश्मीरतिव्वताद्यनेकदेशाधीश्वरो महाराजाधिराजः श्रीप्रतापसिंहवर्मा,

> सद्धर्मानवता मनश्चदुरितव्यावृत्तमातन्वता
> श्रीशंपूजयता खलान्विजहता संगृह्णतासज्जनान् ॥
> येनान्त्यंयुगमप्यकारि बलवद्धर्मैकतानंकृती
> जीयादब्दशतं सचित्रचरितःकाश्मीरजम्बूपतिः ॥ १ ॥

तथास्मिन्ग्रन्थे टिप्पण्यांद्रष्टृजनसुखाय मूलप्रतीकाः ग्रन्थकृतामभिधाश्च ( ) एवमाकारार्द्धचन्द्रचिन्हद्वयमध्येनिवेशिताः ॥

तथात्रमुद्रणसमयेदशमेपृष्ठेपञ्चमपंक्तौ"दग्धेन्धनमिवानलमित्यतोग्रे"असङ्गोह्ययंपुरुषः, इतिमूलपाठोक्षरयोजकप्रमादाद्गतः ॥

एकचत्वारिंशत्तमेपृष्ठेसप्तविंशपङ्क्तिपाठःप्रमादादागतः ॥

षडुत्तरशततमपृष्ठेचतुर्थपङ्क्तौ मयिसर्वात्मनातुष्टइति मूलपाठस्थाने अक्षुब्धचित्तविश्रान्तइतिपाठःप्रमादेनप्रक्षिप्तः ॥

एवमप्यत्रपुन्धर्मभूतभ्रान्तिप्रयुक्तान्दोषान्सन्तःक्षाम्यन्त्वितिशम् ।

{ पं॰जगदीश्वरः

## ॥ ॐ श्री गुरुभ्यो नमः ॥

॥ श्रीहेरम्बोविजयते ॥

॥ अद्वैतमार्तण्डः ॥

सत्य ज्ञान सुखात्मकं शिवतनुं ब्रह्मादिं संसेवितं ।
मोहध्वान्त विनाशनैकशशिनं स्वात्मस्वरूपं गुरुं ॥
ध्यात्वातत्किरणात्मिकां हरवधूं विद्यास्वरूपां शिवां ।
जीवन्मुक्तिसुखामृताब्धिलहरींध्यायाम्यभीष्टाप्तये ॥१ ॥

टी॰मं॰॥ साङ्गंवेदंशास्त्रजातश्चशिष्यव्रातेयैरध्यापितोराजपूज्यैः॥ देशेदेशेव्याप्तो यद्यशश्चस्वच्छंविद्वद्वक्त्रपंकेरुहेषु ॥ १ ॥ तान्श्रीगोकुलचन्दनामदधतः श्रीतातपादान् गुरून् नामंनाममहं विशुद्धचरितानद्वैतमार्तण्डगाः ॥ व्याचक्षेसकलाः श्रुतीः स्मृतिवचांस्यन्यानिपद्यानिच ब्रह्मानन्दयतीन्द्रमोदविधयेतेषांकृपादोर्बलात् ॥ २ ॥ (सत्यज्ञानसुखात्मकमिति) गुरुन्ध्यात्वा हरवधून्ध्यायामीतिसंबन्धः(गुरुमिति) वेदान्तवेद्यंब्रह्मेत्यर्थः, तथाचशुकरहस्योपनिषद्युक्तं“ब्रह्मानन्दंपरमसुखदंकेवलंज्ञानमूर्तिं विश्वातीतंगगनसदृशं तत्त्वमस्यादिलक्ष्यम् ॥ एकंनित्यंविमलमचलंसर्वधीसाक्षिभूतं भावातीतंत्रिगुणरहितंसद्गुरुंतंनमामि,इति(ध्यात्वेति)स्वाभिन्नत्वेनानुसन्धायेत्यर्थः, ब्रह्मचवेदान्तेषु ज्ञेयत्वेनोपास्यत्वेनचाद्विरूपमुक्तं तदुभयरूपमप्यत्रतात्पर्य्यविषय इतिसूचयन्, तत्राद्यदिदर्शयिषयागुरोर्विशेषणद्वयमाह (सत्यज्ञानसुखात्मकमिति ) (स्वात्मस्वरूपमितिच)अत्राद्ये‘नित्यंविज्ञानमानन्दं ब्रह्मेत्याद्या,द्वितीये“तत्त्वमस्यहंब्रह्मास्मीत्याद्याश्रुतयोमानम्,(स्वात्मस्वरूपमिति)स्वशब्देनध्याताऽन्तःकरणविशिष्टस्तस्यात्मा परमार्थरूपंतत्स्वरूपंयस्यतमित्यर्थः,तस्यैवब्रह्मरूपगुरोरखण्डाकारवृत्यारूढस्याज्ञाननिवर्त्तकत्वमिति सूचयंस्तस्यविशेषणान्तरमाह ( मोहेति)मोहोऽनाद्यज्ञानं सएवध्वान्तमन्धकारस्तस्यविनाशनेध्वंसे एक अद्वितीयः शशी चन्द्रइतिरूपकम्,“तमेवविदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेयनायेतिश्रुतेः,अत्रसूर्य्यमनुक्त्वा चन्द्रोक्तिस्तत्रोपमेयेतापशान्तेर्ध्वननार्था, गुरोर्द्वितीयरूपदिदर्शयिषयाविशेषणद्वयमाह (शिवतनुमिति)(ब्रह्मादिसंसेवितमितिच,शिवोमहादेवः शुद्धसत्त्वप्रधानमायोपहितचैतन्यरूपःसतनुःसगुणंरूपंयस्येत्याद्यार्थः,तस्यैवशक्तिरूपत्वेनोपासनांदर्शयति

द्वैतध्वान्तविनाशाय सारमाकृष्यसर्वतः ।
क्रियतेऽद्वैतमार्त्तण्डो ब्रह्मानन्देनभिक्षुणा ॥ २ ॥

(हरवधूमिति) हरस्यमहादेवस्यवधूर्भार्यापार्वतीतामित्यर्थः, वधूर्जायास्नुषास्त्रीष्वित्यम रः, पार्वतीशिवयोः प्रसन्नताबोधनायतांविशिनष्टि (तत्किरणातिमिकामिति) तस्यशिव स्यकिरणामयूरवायस्मिंस्तादृश आत्मादेहोयस्यास्तामित्यर्थः, शिवस्यतेजस्वित्वात् नकिरणानुपपत्तिः, यद्वा हरस्यसद्रूपस्यब्रह्मणोवधूरिववधूश्चिदंशश्चिच्छक्तिस्तामित्य र्थः, भार्यापि पत्युरंशोभवति "अर्द्धोवाएषआत्मनोयत्पत्नीत्यादेश्रुतेः ॥ तत्कि रणात्मिकामित्यत्र चन्द्रस्य चन्द्रिकावद्या रुद्रोद्बोधस्वरूपिणी ॥ विद्यारूपा भवा नीया प्रोक्ता साद्वैतबोधिनीत्यागमोपिमानम् ॥ तद्ध्यानस्याभीष्टदानक्षमत्वमस्तीत्या ह (विद्यास्वरूपामिति) विद्याशब्देन परापरविद्ये तत्र परविद्या ब्रह्मसाक्षात्कार रूपा, अपरविद्या ऋग्वेदादिलक्षणा स्पष्टश्चैतन्मुण्डकतद्भाष्ययोः तेरूपंयस्यास्त द्रूपामित्यर्थः, तदुक्तं विद्यास्समस्तास्तवदेविभेदा इति, तस्याविघ्ननिवर्त्तकत्वमाह (शिवामिति) मङ्गलरूपामित्यर्थः, शिवशब्दादर्शआद्यच् श्वःश्रेयसं शिवं भद्रंक ल्याणं मङ्गलं शुभमित्यमरः, तस्या नैहलौकिकफलमात्रदात्रीत्वं किन्तु मुक्तिदात्री त्वमपीत्याह (जीवन्मुक्तेति) जीवन्मुक्तानां यत्सुखं ब्रह्मानन्दरूपं स एवामृता ब्धिस्तस्य लहरी तरङ्गः तद्भूतामित्यर्थः, तद्वान्तरितत्त्वमारोप्यैषोक्तिरविलम्बेनोपासना द्वारा तदात्मीत्वध्वनतार्था, यद्वा गुरुं श्रीदक्षिणामूर्तिं स्वविद्यागुरुं वा ध्यात्वा शि वां पार्वतीं ध्यायामीत्यन्वयः; शिवाभवानीरुद्राणीत्यमरः, तत्र गुरोर्विशेषणानि प ञ्च सत्यज्ञानसुखात्मकमित्यादीनि, शिवा विशेषणानि चत्वारि, अत्र पूर्वार्धेन गुरु वन्दनम्, उत्तरार्द्धेन स्वेष्टदेवताया श्रीभुवनेश्वर्या उक्तिः, शेषं पूर्ववत्, अस्मिन्ग्रन्थे मन्त्रोपासनाया अपि परंपरया मोक्षसाधनत्वोपदेशात्तदुपासकानामाल्हादजनना यात्र प्रथमश्लोके श्रीमन्नारायणाष्टाक्षर शिवपञ्चाक्षर श्रीविद्यापञ्चदशाक्षरी गणे शाष्टाक्षर नवाक्षर श्रीमदादिशक्तिवीज लक्ष्मीवीज कामवीज कालीवीज वा ग्वीज तारणीवीजद्वय सार्द्धपंचाक्षरी वगुलामुखीवीज त्रिपुरसुन्दरीवीज कृष्ण वीज रामवीज नृसिंहवीज सूर्य्यनारायणत्र्यक्षर्य्याद्याः वहयोमन्त्राःलक्षणया लक्षि तलक्षणया व्यवहितवर्णानां यथायोग्यं स्वरव्यंजनत्याग ग्रहणपूर्वकमव्यवहितमे लननेच * समुद्धृतास्सन्ति, तथा तेषामद्वैतमेवसिद्धान्त इति ज्ञापनाय गुरुमन्त्रदे वतास्वात्मानामैक्यंच प्रदर्शितमस्ति, तादिदं तत्सम्प्रदायरहस्यज्ञा विजानन्तु १॥

* यद्यप्यत्रोदाहृताः सर्वे मन्त्रा युगपदस्माच्छ्लोकगतवर्णसमूहादुद्धर्त्तुमशक्या स्तथापि मालामंत्रव्यतिरिक्तो योयस्येष्टमन्त्रः सोऽस्मादुद्धर्तुं शक्यतएवेतिभावः ॥

इह खलु पदार्थौ द्विविधः, आत्मानात्माचेति, तत्राद्यः पारमार्थिकः, द्वितीयस्त्वपारमार्थिकः, नचात्मनःपदार्थत्वेऽनाद्यविद्याकल्पितपदार्थान्तरवत्कल्पितत्वंस्यादिति वाच्यम्, निरधिष्ठानकल्पनायोगात्सर्वकल्पनाधिष्ठानत्वेन तस्यप्रागेव स्वतस्सिद्धत्वात्, निरधिष्ठानबाधायोगात्पश्चादपि सर्वबाधावधित्वेन परिशिष्यमाणत्वाच्च, ननुसर्वसारोपनिषदि "अथकतिपदार्थाइति सदसन्मिथ्याचेतित्रयः,सदेवतत्रब्रह्म, असत्तुछं, जगत्कल्पितं ब्रह्मण्यसत्यंमिथ्येति, पदार्थत्रैविध्योपदेशात्, शास्त्रान्तरेष्वप्यधिकपदार्थोपलम्भनाच्च, कथम्पदार्थद्वैविध्यमितिचेन्न, तेषामत्रैवान्तर्भावसम्भवात्, अत्रात्मव्यतिरिक्तानात्मनः परमार्थतोनरशृङ्गायमाणत्वेऽपि प्रतीयमानस्य तस्य व्यवहारमात्रप्रयोजकतया पृथग्ग्रहणमिति बोध्यम्, तत्रात्मातावदज्ञानतत्कार्य्याहंकारादिसकलप्रपंचसाक्षी परिपूर्णः सच्चिदानन्दस्वरूपः "एकोदेव स्सर्वभूतेषुगूढ स्सर्वव्यापी सर्वभूतान्तरात्मा कर्म्माध्यक्ष स्सर्वभूता

( अथकतीति ) अथशब्दःप्रश्ने ( पदार्थाइति ) पदार्थभेदा इत्यर्थः,कति किंसंख्या इति पृच्छामीत्यर्थः,तदुत्तरमाह ( सदित्यादिना ) तान्विशिष्यदर्शयति (सदेवेत्यादिना ) तत्राद्यमाह ( सदेवेति ) तेषु त्रिविधपदार्थेषुमध्ये ब्रह्मसदेव नासन्नापिमिथ्येत्यर्थः, द्वितीयं पदार्थभेदमुदाहरति (असदिति) तुच्छं शशशृङ्गादसदित्यन्वयः, तृतीयमुदाहरति ( जगत्कल्पितमिति ) ब्रह्मणि कल्पितमतएवासत्यंजगन्मिथ्येत्यन्वयः, ( शास्त्रान्तरेष्विति ) वैशेषिकादिष्वित्यर्थः, ( नरशृङ्गायमाणत्व इति ) तच्च श्रौतदृष्ट्येतिबोध्यम् ) तदुक्तम् ॥ तुच्छानिर्वचनीयाच वास्तवीचेतिसान्त्रिधा ॥ ज्ञेयामायात्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैरिति, ( एकोदेवइति ) श्वेताश्वतरस्थमिदं, मूर्त्तित्रयस्य ब्रह्मरुद्राद्यात्मनो भेदं प्रत्याह ( एकइति ) जाड्यम्प्रत्याह ( देवइति ) ज्ञानघनइत्यर्थः,आदित्यादिवैषम्यमाह ( सर्वेति) तर्हिकिमिति नप्रतीयते तत्राह(गूढइति) अनादिमायया छन्नइत्यर्थः, तत्तद्भूतावच्छिन्नत्वेन परिच्छिन्नत्वं नेत्याह ( सर्वव्यापीति) ननोवत्ताटस्थ्यंवारयति ( सर्वभूतान्तरात्मेति) सर्वेषु भूतेष्वन्तःस्थितस्य तत्तत्क्रियाकर्त्तृत्वं नास्तीत्याह ( कर्माध्यक्षइति ) सर्वकर्मसाक्षीत्यर्थः, सर्वभूतेष्वित्यादिना भूतानां पृथगुक्तेः सद्वितीयत्वमाशंक्याह ( सर्वेति ) सर्वेषां भूतानामधिवासोधिष्ठानं नचकल्पितमधिष्ठानादर्थान्तरमित्यर्थः, नकेवलं कर्मणामध्यक्षोऽपितु तत्कर्तॄणामपीत्याह ( साक्षीति ) साक्षित्वेहेतुमाह ( चेतेति ) चित्स्वभावइत्यर्थः, केवलोद

धिवासस्साक्षी चेता केवलो निर्गुणश्च, "सत्यंज्ञानमनन्तंब्रह्म, "नित्यं विज्ञानमानन्दम्ब्रह्म "अत्रायं पुरुषः स्वयं ज्योतिर्भवति "तच्छुभ्रंज्योतिषांज्योतिः "अविनाशी वा अरेयमात्मा "एकं सर्व गतं सूक्ष्मं कूटस्थमचलं ध्रुवं योगिनस्तम्प्रपश्यन्ति महादेव्याः परम्पदम्, "अयमात्मा ब्रह्मेत्यादिश्रुतिभ्यः ॥ अत्रसर्वभूता धिवासइत्यनेनात्मनः प्रपंचाधिष्ठानत्वं तटस्थलक्षणमुक्तंभवति,

स्यवर्ज्जितः, अद्वितीयः, निर्गुणो ज्ञानादिगुणरहितः, चकारो दोषाभावसमुच्च यार्थः ॥ इति ब्रह्मानन्दामृतवर्षिण्याख्य व्याससूत्रवृत्तिगतेयं व्याख्या । (सत्यंज्ञान मिति ) तैत्तिरीयोपनिषदानन्दवल्लीस्थम्, सत्यादिविशेषणत्रयं ब्रह्मस्वरूपलक्षण परमितिबोध्यम् ॥ ( नित्यविज्ञानमिति ) अस्यार्थः पूर्ववत्, ॥ ( अत्रा यम्पुरुषइति ) वृ० अ० ४ ब्रा० ३ अत्रास्यां स्वापावस्थायां अयम्पुरुष आत्मा स्वयमेव ज्योतिर्भवति तदाऽऽदित्यादेरभावात्, इन्द्रियाणांचोपसंहृतत्वान्मनसश्च विषयाकारेणोपक्षयादितिपरिशेषादित्यर्थः, ॥ बृहदारण्यकमिताक्षरायां, ( अवि नाशीवेति ) मैत्रेयींप्रतियाज्ञवल्क्योक्तिरियम्, अनुच्छित्तिधर्मेत्यग्रिमपदम्, अविनाशित्वमपरिणामित्वं तत्रहेतुरनुच्छितीति,(तच्छुभ्रमिति)मुण्डकस्थमिदम्,) तच्छब्देन हिरण्मये परेकोशे विरजं ब्रह्म निष्कलमिति पूर्वार्द्धोपात्तं ब्रह्म परा मृश्यते, तद्ब्रह्मशुभ्रं अविद्यादिदोषवर्जितम् ज्योतिषां सूर्य्यादीनामपि ज्योतिः प्रकाशकमित्यर्थः ॥ ( एकंसर्वगतमिति ) रुद्रविष्णुगणेशशक्तिसूर्य्यात्मना मूर्त्ति पचकस्य भेदंप्रत्याह ( एकमिति ) परिच्छिन्नत्वं निषधति ( सर्वगतमिति ) व्या पकमित्यर्थः, तर्हि किमितिनप्रतीयते तत्राह (सूक्ष्ममिति) अनादिमायाच्छन्नत्वा दुर्ज्ञेयमित्यर्थः, उक्तव्यापकत्वोपपत्तये नित्यतामाह ( कूटस्थमिति) कूटमयोघन स्तद्वत्तिष्ठति संसर्गिनाशेपि स्वयं न नश्यति तदित्यर्थः, ननुकूटस्थत्वं परमाणो रिव चलत्वेप्युपपन्नमिति कथं व्यापकत्वमतआह(अचलमिति) क्रियारहितंमित्य र्थः, एवमप्ययोघनदृष्टान्तेन प्रसक्तंनाशं वारयति ध्रुवमिति कालत्रयेप्यनश्वरमि त्यर्थः, ईदृशं तमुपनिषदादिप्रमाणसिद्धं परं देहादिभ्यःपरं महादेव्याः सूर्यादीना मपि प्रकाशकत्र्यांश्चिच्छक्तेः पदं स्वरूपं योगिनः योगयुक्ताः पश्यन्ति अभेदेन साक्षात्कुर्वन्तीत्यर्थः ॥ मत्कृतेयंव्याख्या ( अयमात्मेति ) माण्डूक्यस्थम्,किम्पुनस्त द्ब्रह्मात्मनोऽर्थान्तरंनेत्याह ( अयमिति ) अयंप्रत्यगात्मैव ब्रह्म नत्वर्थान्तरमित्यर्थः॥

यावल्लक्ष्यकालाऽनवस्थितत्वेसति यद्व्यावर्त्तकं तत्तटस्थं, यथा देवदत्तस्य स्वप्नप्रपंचाधिष्ठानत्वं, यथावा शुक्तेरजतप्रपंचाधिष्ठानत्वं, यथावा पृथिव्यागन्धवत्वं, आत्मनस्तु सृष्टेः पूर्वं प्रलयानन्तरंच प्रपंचाधिष्ठानत्वाभावाल्लक्षणसमन्वयः "सदेव सोम्येदमग्रआसीत्, "अथात आदेशो नेति नेतीत्यादिश्रुतेः, "नित्यं विज्ञानमानन्दमित्यनेनात्मन स्सच्चिदानन्दस्वरूपत्वं स्वरूपलक्षणमुक्तं भवति, नच सत्यंज्ञानमित्यत्र ज्ञानपदस्यान्तोदात्तत्वात्तस्य मत्वर्थी

(सदेवसोम्येदमिति) छान्दोग्यषष्ठप्रपाठकस्थम्, सद्दिस्यस्तितामात्रंबोध्यते,एवेत्यवधारणे, किंतदवधियते तदाह ( इदमिति ) यदिदं व्याकृतं जगत् तदग्रे उत्पत्तेःप्राक् सदेवासीत्, अव्याकृतंसत्कारणात्मकं ब्रह्मैवासीदित्यर्थः, हेसोम्य प्रियदर्शनेति पित्राउद्दालकेन पुत्रःसम्बोध्यते ॥ ( अथातआदेशइति ) वृ० अ० २ ब्रा० ३ ब्रह्मणः सपरिकरमूर्त्तामूर्त्तात्मकरूपद्वयोपन्यासस्य ब्रह्मज्ञानहेतुत्वं ब्रह्मणोवक्तव्यत्वेन परिशेषोवातः शब्दार्थः, इतिशब्देन ब्रह्मणो रूपद्वयं सपरिकरं यदुपन्यस्तंतत्परामृश्यते, इतिशब्देन परामृष्टं सर्वनञावीप्सया निषिध्यते नेतिनेतीति,तेन अथ पञ्चभूतात्मकरूपद्वयोक्त्यनन्तरं ब्रह्मवक्तव्यत्वेन परिशिष्यतेऽतस्तस्य नेतिनेतीत्युपदेशः क्रियते इत्यर्थः, विषयजातस्य सर्वस्य निषेधेह्यविषयः प्रत्यगात्मा निषेधावधिभूत इति निर्विचिकित्सं ज्ञानं भवतीतिभावः, ( ब्र० ) ननु"नित्यंविज्ञानमिति श्रुतेरात्मनो ज्ञानस्वरूपबोधकत्वेपि सत्यंज्ञानमिति श्रुतौ ज्ञानपदस्यान्तोदात्तत्वेन तद्बोधकत्वासम्भवइत्याशंकते (नचेति) अस्यायंभावः सत्यंज्ञानमिति श्रुतौ ज्ञानपदंज्ञा अवबोधनेइति धातोः नपुंसकेभावोक्त इतिसूत्रादुत्तरेण ल्युट्चेति सूत्रेण नपुंसकत्वविशिष्टे भावे धातोर्ल्युट्स्यादित्यर्थकेन ल्युट्प्रत्ययान्तं, तत्रच धातोरन्तउदात्त इत्यर्थकेन धातोरिति सूत्रेण ज्ञाधातोराकारउदात्तः ततः परस्य ल्युट्प्रत्ययस्य लकारटकारयोरित्सञ्ज्ञालोपाभ्यामपहारे युवोरनाकाविति युशब्दस्य अनइत्यादेशः तस्यच आद्युदात्तश्चेति सूत्रेण प्रत्ययस्यादिरुदात्तःस्यादित्यर्थकेनप्राप्तामादेरकारस्योदात्ततांबाधित्वालिति इति सूत्रेण लितःप्रत्ययात्पूर्वमुदात्तमित्यर्थकेन ज्ञाधातोराकारस्य पुनरुदात्तत्वेसति अनुदात्तंपदामिति अनस्याकारयोरनुदात्तत्वे अकःसवर्णेदीर्घ इति

यार्श आद्यच्प्रत्ययान्तत्वं वक्तव्यम्, तेन ज्ञानाश्रयोब्रह्म नज्ञा
नमात्रम्, अन्यथा स्वरविरोधापत्तेरिति वाच्यम् "स्योनन्ते सद
नं कृणोमि "दानेनद्विषन्तोमित्रा भवन्तीत्यत्रेव नप्रत्ययान्तत्वेन
युचप्रत्ययान्तत्वेन वा तदुपपत्तेः, नित्यत्वंच कालत्रयाबाध्यत्वम्

सूत्रेण धात्वाकारप्रत्ययाकारयोर्दीर्घः सचैकादेशउदात्तेनोदात्त इति सूत्रेण उदा
त्तेन सहैकादेश उदात्तः स्यादित्यर्थकेनोदात्त इत्येवं निष्पन्नाद् ज्ञानशब्दात्सुप्र
त्यये अतोमिति सूत्रेण तस्यामादेशे तस्य चानुदात्तौसुप्पिताविति सूत्रेण सुप्त्वा
दकारस्यानुदात्तत्वे ज्ञानशब्दाकारस्यामोऽकारस्य चामिपूर्वं इति सूत्रेण पूर्व
रूपैकादेशः सचान्तरतम्यादनुदात्त इत्येवं ज्ञानमिति पदमुदात्ताद्यच्कमनुदा
त्तद्वितीयाच्कंस्यात्, अध्ययनशैलीप्राप्तन्त्वनुदात्तादित्वे सत्यंतोदात्तं, तच्चल्युड
न्तेनानुपपन्नमिति तदुपपत्तये अर्शआदिभ्योऽजिति सूत्रेण अर्शआदिभ्योमत्वर्थे
ऽच्स्यादित्यर्थकेन ल्युडन्तस्य तद्धिताच्प्रत्ययान्तत्वमङ्गीकर्त्तव्यं, तथाहि ल्युड
न्तज्ञानशब्दात् ज्ञानमस्यास्मिन्वास्तीत्यर्थेऽच्प्रत्यये सति तस्य चितइति सूत्रेण
चितोन्तउदात्त इत्यर्थकेनोदात्तत्वे सति यस्येतिचेति सूत्रेण भसंज्ञकस्येवर्णावर्ण
योर्लोपः स्यादीकारे तद्धिते च परे इत्यर्थकेन नकाराकारस्य लोपेऽनुदात्तंपद
मिति ज्ञाधात्वकारस्यानुदात्तत्वमेवं निष्पन्नादन्तोदात्तात् सुप्रत्यये तस्यामादेशे
तदकारस्यानुदात्तौ सुप्पितावित्यनुदात्तत्वे सत्यमिपूर्वं इति पूर्वरूपं, तच्च एका
देशउदात्तेनोदात्त इत्युदात्तं इत्यनुदात्ताद्युदात्तान्तंज्ञान मिति सिद्धम्, तच्च मत्व
र्थीयाच्प्रत्ययान्ततया ज्ञानाधिकरणार्थक मिति कथं तादृशज्ञानपदघटिताया
उक्तश्रुतेर्ब्रह्मणो ज्ञानरूपतोच्यत इति ॥ प्रदर्शितशंकां परिहरति ( स्योनन्तइ
त्यादिना ) "स्योनन्तेसदनं कृणोमीति, तैत्तिरीयशाखास्थं पुरोडाशस्थापन
स्थाननिर्म्माणे विहितं यजुः, हेपुरोडाश ते त्वदर्थं स्योनं समीचीनं सदनं सी
दति निषीदत्यस्मिन्निति सदनं स्थितिस्थानं कृणोमि करोमीत्यर्थः, व्यत्ययोब
हुलमिति व्यत्ययेन श्नुविकरणः ( दानेनेति ) तैत्तिरीयारण्यकस्थनारायणोप
निषदुपान्तिमानुवाकस्थमिदम्, स्वस्वत्व निवृत्ति परस्वत्वोत्पत्युभयानुकूलो
व्यापारो दानम्, तेन द्विषन्तः शत्रयोपि मित्रा मित्राणि भवन्तीत्यर्थः ॥
( मित्राइति ) मित्रशब्दाज्जसिजःशसोःशिरिति तस्य शौनपुंसकस्य झलच इति
नुमि उपधादीर्घेशेश्छन्दसिबहुलमिति शेर्लोपे ततो नलोपेसिद्ध्यति ताताऽपि
ण्डानामितिवदिति श्रुतिद्वयस्यार्थः, ॥ समाधानग्रन्थस्यत्वयंभावः येनविधि
रिति सूत्रेभाष्ये स्योनशब्दस्य षिवुतन्तुसन्ताने इत्यतो नप्रत्ययनिष्पन्नत्वोक्त्या

चित्वं इतराप्रकाश्यत्वेसतीतरप्रकाशकत्वम्, निरतिशयप्रेमास्प दत्वमानन्दत्वम् "त्रिकालाबाध्यं सत्यं त्रिकालानुस्यूतं सत्यं यदस्ति तत्सत्यं, किंज्ञानमिति स्वप्रकाशं ज्ञानं, सर्वप्रकाशकं ज्ञानं,निरावरणचिन्मात्रं ज्ञानम्, किमानन्दमिति अम्भसामर्णव इव सुखचेतनानामधिष्ठाननित्यशुद्धाखण्डाद्वैत चिदानन्दैकरसमा नन्दमित्यादिश्रुतेः,यद्यपि सच्चिदाद्यन्यतमस्यैव लक्षणत्वोक्तौनकु त्राप्यातिव्याप्ति स्तथापि जडत्वापुरुषार्थत्वशंकापरिहाराय चि दानन्दपदे बोध्ये,अन्यथा तस्य श्रुत्युक्तजिज्ञास्यत्वंनस्यात्,स्वरू पपदंतु तस्य तद्गुणत्ववारणाय,ननुलक्षणप्रमाणाभ्यांहि वस्तुसि द्धिरितिन्यायादात्मनोलक्षणसत्वेपि प्रमाणाभावात्कथंतत्सिद्धिः, नचोदाहृत श्रुतय एव तत्र प्रमाणमिति वाच्यम्, तयोरन्योन्या श्रयत्वप्रसङ्गेन तासां तत्प्रमाणत्वायोगादितिचेन्न, अन्योन्याश्रय स्य वक्तुमशक्यत्वात्, नहि वयं तार्किकाणामिवेश्वररूपाप्तप्रणी तत्वेन वेदस्य प्रामाण्यमङ्गीकुर्मः, येनतयोरन्योन्याश्रयस्स्यात्,

धाप्पृवस्यज्यतिभ्योन इत्युणादिसूत्रविहितनप्रत्ययस्योणादयोबहुलमिति बाहुल कमाश्रित्य धात्वन्तरादप्युत्पत्तेः प्रामाणिकतया बाहुलकादेव भावार्थकतायाश्च निर्बाधतयोक्तश्रुतिघटकज्ञानशब्दे तादृशनप्रत्ययस्याङ्गीकारेण, सुयुरुवृञोयु जिति सूत्राद्युजित्यनुवर्त्तमाने पठितेनबहुलमन्यत्रापीत्युणादिसूत्रेण सामान्य तोविहितस्य युच्प्रत्ययस्याङ्गीकारेण वान्तोदात्तज्ञानस्य सिद्धौ सम्भवंत्यामर्श आदिगणे तत्पाठकल्पना नन्याय्या, त्वयापि हि "स्योनन्ते सदनं कृणो मि "दानेन द्विषन्तो मित्रा भवन्तीत्यादावन्तोदात्त स्योन दानादिशब्देष्व शआद्यचोनुपपन्नार्थकतया नप्रत्ययो युच्प्रत्ययोवा स्वीकर्त्तव्य एव, आनन्द वल्लीभाष्ये भावल्युडन्तइत्यनुक्त्वा भावसाधनो ज्ञानशब्द इत्येतन्मात्रं ब्रुवतां भाष्यकृतामप्यत्रैव तात्पर्यमिति ( स्वकृत० )( त्रिकालाबाध्यंसत्यमिति ) किं ज्ञानमिति, किमानन्दमितिचेमाः श्रुतयस्तैलंगाक्षरमुद्रितसर्वसारोपनिषत्स्थाः, स्पष्टार्थाः, (स्वरूपपदंत्विति ) निरवयवात्मनोमनःसंयोगायोगान्नानित्यज्ञाना नन्दादिगुणाश्रयत्वं समवायासंभवादेकस्यैव गुणगुणित्वासम्भवाद्धर्मविशि ष्टस्यानित्यत्वदर्शनाच्च, एतेन प्रदीपप्रभान्यायेन ज्ञानस्यद्रव्यत्वमङ्गीकृत्यात्मनो ज्ञानाश्रयत्ववादोपि निरस्तः; प्रदीपवदेवात्मनोपि सावयवत्वेनानित्यत्वापत्ते श्च; आनन्दपदस्य पुंस्त्वाभावस्तु छान्दस इतिभावः, ( स्वकृत०, )

अपितु फलवदर्थवत्वेसत्यज्ञातज्ञापकत्वेनइति तत्रतत्प्रमाणत्वोपप
त्यातात्सिद्धिः, यद्वा यस्यहि सत्वासत्वयोस्संशयःतस्यैव तन्निर्णया
यप्रमाणापेक्षा भवति यस्य पुनस्तत्संशयोनास्ति नतत्सत्वे प्रमा
णापेक्षा संशयाभावात्, तथाच अहमस्मि नवेति संशयाद्यभावे
न निश्चितसत्ताकस्यात्मनः सद्भावे प्रमाणापेक्षाभावात् प्रमाण
प्रमेयप्रमात्राद्याधारत्वेन तस्य स्वतः सिद्धिः, तदुक्तम् प्रमाताच
प्रामाणंच प्रमेयं प्रमितिस्तथा ॥ यत्सान्निध्यात्प्रसिध्यन्ति तत्सि
द्धौ किमपेक्षतइति ॥ किंच अतति सन्ततभावेन जाग्रद्दशादिसर्वा
वस्थास्वनुवर्त्तत इति व्युत्पत्यापि तस्य नित्यत्वसिद्धिः ॥ तदुक्तम्
यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥ यच्चास्य सन्ततोभा
वस्तस्मादात्मेति गीयत इति, अन्यथा कस्यापि सिद्धिर्नस्यात् ॥

( प्रमातेति ) इ० वार्त्तिकस्थोयंश्लोकः, ८७०, प्रमेयोनिश्चितिस्तथेतिपाठा
न्तरं, विमातं मानान्तरानपेक्षं तत्साधकत्वात् यत्यत्साधकं तत्तदनपेक्षं
यथाघटसाधकोदीपस्तदपेक्षोनभवतीत्यर्थः, प्रमाणादीनां भावाभावयोस्साक्षि
त्वेन सदाविद्यमानस्यात्मनो मानान्तरायोग्यत्व सिद्धिरितिभावः, ( यच्चाप्नो
तीति ) द्विविधोह्यात्मा व्यवहारविशिष्टः केवलश्चेति व्यवहारोपि त्रिविधः जा
गरणं स्वप्नः सुषुप्तिश्चेति तत्र सुषुप्तावयंजीवः स्वोपाधिविलयेसति परमानन्द
रूपं ब्रह्मप्राप्नोति तथाच कैवल्योपनिषदि श्रूयते "सुषुप्तिकाले सकले वि
लीने तमोऽभिभूतः सुखरूपमेतीति, तस्मादप्नोतीत्यात्मेति स्मर्यमाणं प्रथमं
निर्वचनं दृष्टव्यम् ॥ स्वप्नावस्थायामयंजीवो जागरणस्थपदार्थवासनाः सर्वाआ
दत्ते तथाच वाजसनेयिन आमनन्ति "सयत्रप्रस्वपित्यस्य लोकस्य सर्वावतो
मात्रामपादाय स्वयंविहत्य स्वयंनिर्माय स्वेनभासा स्वेनज्योतिषा प्रस्वपितीति,
अस्यायमर्थः यदायंजीवो वाक्चक्षुरादिदशविधबाह्यकरणोपरतिरूपं स्वापं प्रा
प्नोति तदानींसर्वावतो गिरिनदीसमुद्रमनुष्यपश्वादिसर्वपदार्थोपेतस्य लोकस्येन्द्रि
यैरवलोक्यमानस्यास्य जगतो मात्रां लेशरूपां वासनामपादाय तत्तत्पदार्थे
भ्योऽपच्छिद्य स्वयंस्वीकृत्य ततो जागरणाभिमानं स्वयमेव विनाश्य स्वप्ने ज
गद्रूपंच स्वयमेवनिर्माय जगदाकारेण परिणमते स्वेनभासा स्वकीयेनान्तःकर
णेन तया स्वेनज्योतिषा स्वरूपचैतन्येन कल्पितपदार्थावभासकेन युक्तः सन्प्र
स्वपितीति तस्माद्वासनास्वीकारादादत्त इत्यात्मेतिद्वितीयं निर्वचनं द्रष्टव्यं,

सच एक एव निर्विकल्पः, "आत्मावाइदमेकएवाग्रआसीन्नान्यत्

जागरणावस्थायां चक्षुरादीन्द्रियैर्बाह्यान्रूपादिविषयानत्तिभुङ्क्ते तथाचाथर्वणिकैरम्नायते "स्त्र्यन्नपानादिविचित्रभोगैः सएव जाग्रत्परितृप्तिमेतीति, ततो वा ह्यविषयभोगानत्तीत्यात्मेति तृतीयं निर्वचनं द्रष्टव्यम्, उपाधिविशिष्टस्यावस्था त्रयमुपजीव्य निर्वचनत्रयमुक्तम् ॥ अथकेवलस्य निर्वचनमुच्यते यद्यस्मात्कारणादस्यात्मनो भावः स्वभावविशेषःसन्ततः परिच्छेदरहितः "तथाच सत्यं ज्ञानमनन्तंब्रह्मेत्यत्र श्रुत्यन्तरे देशकालवस्तुपरिच्छेदराहित्यलक्षणमानन्त्यमाभिहितम्, तस्मादततिसान्तत्येन सर्वत्रसंगछतीत्यात्मेति चतुर्थंनिर्वचनं द्रष्टव्यमितिस्मृत्यर्थः॥ इतिविद्यारण्यकृत० ( आत्मावाइति ) इदमैतरेयस्थम्,सन्ततोऽखण्डैकरसःसर्वजगदधिष्ठानत्वेन तदीयवास्तवस्वरूपभूतःपदार्थ आत्मशब्देनात्र विवक्षितः,वैशब्दोऽवधारणार्थः,इदमिदानीं सार्वजनीनप्रत्यक्षादिप्रमाणैः सर्वैरपि प्रतीयमानं जगदग्रे सृष्टेः पूर्वमात्मैवाऽऽसीत् नतुतत्कार्यंभूतं नामरूपात्मकं जगदासीत्, नाप्यात्मगोचरौ शब्दप्रत्ययावास्ताम् ॥ लोके मृत्काय्यंभूतघटशरावाद्युत्पत्तेः पूर्वं मृदेवास्ति नतु घटादिकम्, तथापि मृद्गोचरौ शब्दप्रत्ययौ विद्येते एव तद्वदत्रापि प्रसक्तौ सत्यां शब्दप्रत्ययावपि वैशब्देन व्यावर्त्येते, देहेन्द्रियादीनामभावेन जिव्हानिष्पाद्यशब्दस्य मनोनिष्पाद्यस्य प्रत्ययस्य चाभावः सुतरामुपपद्यते, नन्विदमात्माऽऽसीदिति सामानाधिकरण्येन जगद्वैशिष्ट्यमात्मनःप्रतीयते नीलमुत्पलमिति सामानाधिकरण्यश्रवणेसत्युत्पलद्रव्यस्य नीलगुणवैशिष्ट्यस्य प्रतिभासात्, मैवं वैशिष्ट्येसत्यग्रशब्दवैयर्थ्यप्रसंगादिदानीं जगद्विशिष्ट आत्मा प्रतिभासत इत्यनुपपत्त्या स्थितिकालं परित्यज्य कवलमात्मानं वक्तुमग्रशब्देन सृष्टेः प्राचीनकाल उपादीयते,तदेवमनेन वाक्येनाखण्डैकरसात्मत्व सूचितंभवति, एकादिशब्दैरखण्डैकरसत्वमेव स्पष्टी क्रियते, लोके वृक्षादिपदार्थेषु स्वगतः सजातीयो विजातीयश्च त्रिविधो भेदोऽस्ति, तत्र शाखास्कन्धपत्रादीनां परस्पर प्रतियोगिको वृक्षस्य स्वगतोभेदः, वृक्षान्तरप्रतियोगिकः सजातीयः, पाषाणादिप्रतियोगिको विजातीयः, तद्वदात्मनोपि प्रसक्तावेकशब्देन स्वगतो भेदो व्यावर्त्यते, नवृक्षवन्नानात्मकोभवति किन्त्वेकात्मक इत्यर्थः, एवशब्देनात्मान्तरव्यावृत्तिः, योऽयमेकः सएव नत्वन्यः कश्चित्तादृश इत्यर्थः, नान्यदित्यादिना विजातीयभेदो निषिद्ध्यते अन्यत्प्रकृतादात्मनो विलक्षणं किंचन किंचिदपि वस्तुन मिषत्,धातूनामनेकार्थत्वान्नासीदित्युक्तं भवति, इयं विद्यारण्यकृत०,

किंचन मिषत्, "सदेवसोम्येदमग्र आसीत्, "सवाएषमहानज आत्माऽजरोऽमरोऽमृतोऽभयोब्रह्म, "शान्तं शिवमद्वैतं चतुर्थंमन्य न्ते स आत्मा सविज्ञेयः, "एकमेवाद्वितीयं ब्रह्म नेहनानास्ति किंचन, निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम् अमृतस्य परंसेतुं दग्धेन्धनमिवानलम्, असङ्गोनहिसज्जते, यत्तदद्रेश्यम

( सदेवेति ) पूर्वव्याख्यातम् ( सवाएषइति ) इदं वृ० अ० ४ ब्रा० ४ सवाएष उक्तरूपो विज्ञानमयः महानवच्छेदकोपाधिरहितः, अतएव स्वतोऽजो जन्मरहित आत्मा अतएवाजरो जरारहितोऽतएवामरः प्राणत्यागरूपमरणरहितो अतएवामृतोनिरन्वयनाशशून्योऽतएवाभयो भयहेत्वविद्यापगमादतएव ब्रह्म सत्यज्ञानादिलक्षणमिति ( वृहदारण्यमिताक्षरा ) अत्रात्मोद्देश्यस्तस्य सइति पदवोधित्वं पूर्वोक्तरूपत्वं एषइति पदवोधितं विज्ञानमयत्वंच विशेषणं अन्यत्सर्वं विधेयम् ॥ ( शान्तंशिवमिति ) माण्डूक्यस्थमिदं, ब्रह्मणश्चतुष्पात्वकल्पनं प्रक्रम्य विश्वतैजसप्राज्ञरूपांस्त्रीन्पादानुक्त्वा तुरीयपादप्रदर्शकम्, शान्तं रागद्वेषादिरहितं कूटस्थमितियावत्, शिवं परमानन्दवोधरूपं अद्वैतं भेदविकल्परहितं चतुर्थं संख्याविशेषविषयत्वाभावेपि पूर्वापेक्षयातुरीयं पादं मन्यन्तेऽवगच्छन्ति श्रुतिविदः, तस्योक्तविशेषणत्वेपि मम किमायातमित्याशंक्याह ( स आत्मेति ) सतुरीयः आत्मा अस्मत्प्रत्ययगोचर इत्यर्थः, ततःकिमित्यत आह ( सविज्ञेयइति ) स तुरीयः अपगतसमस्त विशेष आत्मा विज्ञेयो विशेषेण साक्षात्कर्त्तव्य इत्यर्थः, ॥ ( एकमेवेति ) महानारायण० अ० ३ ब्रह्मलक्षणवाक्यमिदम्, अत्र त्रिभिः पदैः क्रमेण सजातीय स्वगत विजातीय भेदराहित्यमुच्यते, उक्तभेदत्रयशून्यं ब्रह्मेत्यर्थः; ( छा० मि० ) ( निष्कलमिति ) श्वेताश्वतरषष्ठाध्यायस्यैकोनविंशो मन्त्रोयम्, निर्गताः कला अंशा यस्मात्तन्निष्कलम्; अतो निरंशत्वान्निष्क्रियम्, अतः शान्तमपरिणामिं, निरवद्यं रागादिदोषशून्यम्, अंजनं मूलतमःसम्बन्धो धर्म्मादिकंवा तच्छून्यं, किंचामृतस्य मोक्षस्य स्वयमेव वाक्योत्थवृत्तिस्थत्वेन परमुत्कृष्टं सेतुं लौकिकसेतुवत् प्रापकं यथादग्धेन्धनोऽनलः शाम्यति तमिवाविद्यातज्जं दग्ध्वा प्रशान्तं निर्गुणमात्मानं विद्यादित्यर्थः, ( रत्नप्रभा० )( असङ्गोहीति ) वृ० अ० ४ ब्रा० ३ सयत्तत्रकिञ्चित्पश्यत्यनन्वागतस्तेन भवतीति स्वप्नादिकृतकर्म्मस्वकर्तात्मेत्युक्तेर्थे हेतुरुच्यते असङ्गइतिश्रुत्या मूर्त्तं मूर्त्तान्तरेणयुज्यमानं स्पन्दते आत्मातु पूर्णत्वान्नमूर्त्तेन स्थूलसूक्ष्मशरीरादिना केनाचिद्युज्यते तेनाकर्त्तेत्यर्थः ( ब्र० )

ग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यंविभुं सर्वगतं
सुसूक्ष्मंतदव्ययं यद्भूतयोनिम्परिपश्यन्ति धीरा इत्यादिश्रुतिभ्यः,
तद्भेदस्तु घटकरकाद्याकाशवदनात्मकार्याहंकाराद्युपाधिभेदाद
वगन्तव्यः, "तत्सृष्ट्वा तदेवानुप्राविशत्, "सवाएषभूतानीन्द्रिया
णि विराजंदेवताः कोशांश्च सृष्ट्वा प्रविश्याऽमूढोमूढइव व्यवहर
न्नास्ते माययैव तस्मादद्वय एवायमात्मा सन्मात्रो नित्यःशुद्धो
बुद्धः सत्यो मुक्तो निरंजनो विभुरद्वयानन्दः परः प्रत्यगेकरसः

( असङ्गोनहीति ) वृ०अ० ३ ब्रा० ९ अत्रात्मेत्यनुषज्यते, आत्माऽसङ्गः
सङ्गित्वधर्महीनः हियस्मान्नसज्जते केनचिन्नसम्बध्यते मूर्त्तस्यैव तद्धर्मत्वात्,
( वृ० मि० ) यत्तदद्रेश्यमिति ) मुण्डकंप्रथमखण्डस्थमिदम्,ततःपूर्वं "अथ
परा ययातदक्षरमधिगम्यते,इतिपाठः पूर्वमपरा कर्मप्रधाना ऋग्वेदादिलक्षणा
विद्योक्ता तदानन्तर्य्यमथशब्दार्थः,यया तदक्षरमधिगम्यते सापरा उत्कृष्टफल
का विद्येत्यर्थः,अक्षरस्य वर्णसमुदायत्वंवारयति ( यदिति ) अद्रेश्यं अदृश्यं
ज्ञानेन्द्रियागम्यं ( अग्राह्यं ) कर्मेन्द्रियाविषयः, अगोत्रं वंशशून्यं, अवर्णं जा
तिहीनं, नकेवलमिन्द्रियाविषयः किन्तु तद्रहितंचेत्याह ( अचक्षुरिति ) न
विद्येतेचक्षुःश्रोत्रेयस्यतत्तथा,इदंचज्ञानेन्द्रियोपलक्षणं, कर्मेन्द्रियाभावमाह(तदिति)
पाणिश्चपादश्चपाणिपादं तद्यस्यनास्तितत्तथा उपलक्षणमेतत्कर्मेन्द्रियाणां, नि
त्यमनाशोपलक्षितं विभुं प्रभुं सर्वगतं सर्व कल्पनाधिष्ठानं सुसूक्ष्मं दुर्ज्ञानत्वात्,
तदव्ययं नाशाभावात्, यत्तथोक्तमक्षरं भूतयोनिं यथा परिपश्यन्ति धीराः सा परा
विद्येत्यन्वयः, ( तत्सृष्ट्वातदेवेति ) आनन्दवल्लीषष्ठानुवाकस्थमिदम्, तत् हिर
ण्यगर्भादिस्थावरान्तं शरीरजातं यत्किंचिदस्ति तत्सर्वंसृष्ट्वा तदेवसृष्टं शरीरजा
तं परमात्मानुप्राविशत्, नारिकेलेऽम्भइव आदर्शेमुखमिव वा तत्रैवान्तर्गुहायां
बुद्धो द्रष्टाश्रोतामन्ताविज्ञातेत्येवमभिव्यक्ता बभूवेत्यर्थः ( नारायणी )
( सवाएषभूतानीति ) नृसिंहोत्तरतापनी० ख० ९ सएव एष आत्मा भू
तानि पृथिव्यादीनि इन्द्रियाणि चक्षुरादीनि विराजं ब्रह्माण्डं देवता इन्द्रियाधि
ष्ठात्रीःकोशा अन्नरसादिमयास्तान्सृष्ट्वा निष्पाद्य ततः प्रविश्य मध्ये सन्नपि परि
छिन्नाभिमानीभूत्वा स्वयममूढोपि परिछेदं बन्धनं मत्वा मूढइव व्यवहरन्संसर

प्रमाणैरेतैरवगतः, "प्रकाशते स्वयंभेदः कल्पिता मायया तयोः घटाकाशमठाकाशौ यथाकाशप्रभेदतः, "घटाकाशमठाकाशौ महाकाशे प्रतिष्ठितौ एवंमयि चिदाकाशे जीवेशौ परिकल्पितौ, मायातत्कार्य्यविलये नेश्वरत्वं नजीवता, "अनेनजीवेनात्मनानु

प्रास्ते स्वात्मनातिष्ठति माययैव नवस्तुतः, आत्मस्वरूपमुपसंहारव्याजेनाह (तस्मादिति) प्रमाणैरेतैस्सवैश्चक्षुरादिभिरवगतः विषयावच्छेदेनात्मन एव भानात् ॥ नारायणी, (प्रकाशतइति) रुद्रहृदयोपनिषत्स्थमिदम्, ॥ अस्मात्पूर्व "द्वासुपर्णौ शरीरेस्मिन् जीवेशाख्यौसहस्थितौ तयोर्जीवः फलंभुङ्क्ते कर्मणो न महेश्वरः केवलंसाक्षिरूपेण विनाभोगं महेश्वरः, इतिपाठः तेनायमर्थः अस्मिन् शरीरे जीवेशाख्यौ द्वासुपर्णौ द्वौपक्षिणौ सहस्थितौस्तः द्विशब्दात्परस्यौप्रत्ययस्य सुपांसुलुगित्याकारः पर्णशब्दःपत्रवाची तत्साहश्यात्पक्षमभिधत्ते तेन शोभने पर्णपक्षौ ययोस्तौ सुपर्णौ पक्षिणावित्यर्थः,शरीररूपकवृक्षस्थत्वेन तत्साहश्याज्जीवेशौ पक्षिणावुच्येते, तयोर्जीवेशयोर्मध्ये जीवः कर्मणः फलं भुङ्क्ते नतु महेश्वरस्तद्भुंक्ते इत्यर्थः, ईश्वरस्य भोक्तृत्वाभावे तच्छरिरस्थितिर्व्यर्थेत्याशंक्याह (केवलमित्यादि) केवलमित्यस्यार्थः (भोगविनेति) महेश्वरो भोगविनैव साक्षिरूपेण स्वयम्प्रकाशते, नत्वेवंसति जीवेशयोर्द्वित्वं पारमार्थिकं स्यादितिशंकांनिरस्यति (माययेति) तयोर्जीवेशयोर्भेदः मायया समष्टिव्यष्टिरूपया कल्पितः अविद्यागतभेदस्य चैतन्ये आरोपादितिभावः,उक्तमर्थं सदृष्टान्तमनुवदति (घटेति) इतोग्रे"कल्पितोपरमौ जीवशिवरूपेणकल्पितौ,इतिपाठः तेन घटावच्छिन्नआकाशः घटाकाशः मठोगृहं तदवच्छिन्नआकाशो मठाकाशस्तौ यथा महाकाशप्रभेदतः महाकाशे निरुपाधौयः प्रभेदः घटमठयोर्वर्त्तमानस्य प्रसिद्धस्य परस्परभेदस्य आरोपहेतुकस्तस्मात् कल्पितौतथा परमौ मायातदेकदेशरूपोपाधि विशिष्टौ परमौ चेतनत्वेन जडादुत्कृष्टौ पदार्थौ जीवेश्वररूपेण कल्पितावित्यर्थः, (घटाकाशेति) वराहोपनिषत्स्थमिदम्,यथामहाकाशे निरवच्छिन्ने घटाकाशमठाकाशौ प्रतिष्ठितौ एवं चिदाकाशे चित् आकाश इव वस्तुतोनिर्लेपत्वात् चिदाकाशे मयि प्रत्यगात्मनि परब्रह्माभिन्ने जीवेशौ प्रतिष्ठितौ माययेतिशेषः,प्रतिष्ठितौ कल्पिताविरयर्थः, (मायातत्कार्य्येति) वराहोपनिषत्स्थमिदम्,अस्योत्तरार्द्धं "ततः शुद्धश्चिदेवाहं व्योमवन्निरुपाधिकः इति,स्पष्टोर्थः, (अनेनजीवेनात्मनेति) छा० अ० ६ इतःपूर्वं "सेयंदेवतेक्षत हन्ताहमिमास्तिस्रोदेवता इति पाठः तथाच

प्रविश्य नामरूपे व्याकरवाणि, "त्वंस्त्रीत्वंपुमानसि त्वंकुमारउत वाकुमारीत्वंजीर्णोदण्डेनवंचसित्वंजातोभवसि विश्वतोमुखः, "ब्रह्म दाशाब्रह्मदासाः, "एकएवहिभूतात्माभूतेभूतेव्यवस्थितःएकधावहु धाचैवदृश्यते जलचन्द्रवत्, "अग्निर्यथैको भुवनंप्रविष्टोरूपंरूपं प्र तिरूपोबभूव एकस्तथा सर्वभूतान्तरात्मारूपंरूपंप्रतिरूपोवहिश्च, "वायुर्यथैकोभुवनं प्रविष्टो रूपंरूपंप्रतिरूपोबभूव एकस्तथासर्व

सा प्रकृता सच्छब्दवाच्या इयमीक्षित्रीदेवता परोक्षा हन्त इदानीं भूतसृष्टचनन्तरं इमाः सृष्टास्तेजोबन्नरूपाः परोक्षत्वाद्देवता अनेन पूर्वकल्पानुभूतेन जीवेनात्मना ममस्वरूपेण तात्रनुप्रविश्य तासां भोग्यत्वाय नामचरूपञ्च स्थूलं करिष्यामीत्यैक्ष तेत्यन्वयः, ( इतिरत्नप्रभा० ) ( त्वं स्त्री त्वं पुमानिति ) श्वेता० अ० ४, त्वं स्वयमानन्दात्मा स्त्री स्त्रीशब्दप्रत्ययविषयः, त्वं आनन्दात्मा पुमान् पुरुषशब्दप्रत्ययविषयः, असि भवसि, त्वं आनन्दात्मा कुमारः कुमारशब्द प्रत्ययविषयः, उतवा अप्येव कुमारी कुमारीशब्दप्रत्ययविषयः, त्वमितिशेषः, त्वं आनन्दात्मा जीर्णः वयोहीनः दण्डेन दण्डतृतीयपादेन वंचसि अंचसि गच्छसि, त्वं आनन्दात्मा जातःउत्पन्नः भवसि सत्तां करोषि, विश्वतोमुखःसर्व तोमुखो नानावस्थांप्राप्नोषीत्यर्थः,(शङ्करानन्दी) (ब्रह्मदाशाइति) आथर्वणिको पनिषत्स्थम्, दाशाःकैवर्ताः दासाभृत्याः,(ब्र०)(एकएवहीति ) ब्रह्मविन्दुस्थम्, भूतात्माभूतानि पृथिव्यादीनि आत्मा स्वरूपंयस्य कार्यत्वात्, सईश्वरः स्वतएक एवसन् भूतेभूते प्रतिप्राणिव्यवस्थितः अन्तःकरणे प्रतिविम्वरूपेणावस्थितः सन् एकधाविम्वरूपेण एकरूपोदृश्यते वहुधाच अन्तःकरणरूपोपाधिभेदेनाने करूपश्च दृश्यते तत्रदृष्टान्तः जलचन्द्रवदिति यथाजले प्रतिविम्वितश्चन्द्रो विम्वरूपेण एकोदृश्यते पात्रभेदेन भिन्नेषु जलेषु प्रतिविम्वितःसन्बहुधा दृश्य ते तद्वदित्यर्थः, ( स्व० ) ( अग्निर्यथैकइति ) इदंकठोपनिषत्स्थम्, अग्निर्यथे कएव प्रकाशात्मासन्भुवनं भवन्त्यस्मिन्भूतानीतिभुवनं अयंलोकस्तमिमं प्रवि ष्टोनुप्रविष्टः रूपंरूपंप्रति दार्वादिदाह्यभेदंप्रतीत्यर्थः, प्रतिरूपस्तत्रतत्रप्रतिरूपवा न् दाह्यभेदेन बहुविधो वभूव एकएव, तथा सर्वभूतांतरात्मा सर्वेषांभूतानामभ्य न्तर आत्माऽतिसूक्ष्मत्वाद्दार्वादिष्विव रूपंरूपं देहंदेहं प्रति प्रविष्टत्वात् प्रतिरू पो वभूव, ननु विकारे प्रविष्टस्य विकारस्यादित्याशङ्कायामाह ( वहिश्चेति ) वहिश्च स्वेनाविकृतेन असंस्पृष्टरूपेणाकाशवत् स्थितइत्यर्थः ॥ ( शं० भा० ) ( वायुर्यथैकइति ) इयंकठोपनिषदि पूर्वश्रुत्यनन्तरंपठिता, वायुर्यथैकएवसन्

भूतान्तरात्मा रूपं रूपं प्रति रूपोबहिश्च, इत्यादिश्रुतेः, अना त्मातावदनाद्यनिर्वचनीय सत्वरजस्तमोगुणात्मकविक्षेपावरणश क्तिमदज्ञानतत्कार्याहंकारादि साक्ष्यप्रपंचः परिछिन्नोऽनृतज डदुःखात्मकः, "एकएवाद्वितीयंब्रह्म तस्मिन्मरूशुक्तिकास्थाणु स्फटिकादौ जलरौप्यपुरुषरेखादिवल्लोहितशुक्लकृष्णा गुणमया गुणसाम्याऽनिर्वाच्या मूलप्रकृतिरासीत्, "अनात्ममूलंमाया साचब्रह्मण्याकाशे मेघादिरिव दृश्यते मायानामाऽनादिरन्त वती प्रमाणाप्रमाणसाधारणा नसती नाऽसती नसदसत्यनिर्वा

प्राणात्मना देहेष्वनुप्रविष्टो रूपंरूपंप्रतिरूपोवभूवेत्यर्थः, शेषंपूर्ववत्, (शं॰भा॰) ( एकएवाद्वितीयंब्रह्मेति ) पैङ्गलोपनिषत्स्थमिदम्, मरुर्वादीनां जलादिभिर्यं थासङ्ख्यमन्वयः, रेखाशब्देन छायोच्यते लोहितशुक्लकृष्णा लोहितादि शब्दैःरजस्सत्वतमांस्युच्यन्ते तानि प्रचुराणि यस्यांसा अर्शआद्यच् गुणमया गुणान्मिनोति प्रक्षिपतिस्वकार्य्येष्वियासा, गुणान्मयते स्वरूपतयेतिवा, आद्ये डुमिञ्प्रक्षेपणे, अन्त्येमयगतौ, यद्वा गुणशब्दोभावप्रधानः ब्रह्मणिगुणभावं गच्छति तन्नियम्यत्वात्, पक्षत्रयेपि पचाद्यजन्तेन तत्पुरुषः, गुणसाम्या गुणानां सत्वादीनां साम्यंयस्यांसा गुणसाम्या, अनिर्वाच्या सत्वेनासत्वेन च निर्वक्तुमशक्या तुच्छेतियावत्, मूलप्रकृतिः आदिःप्रकृतिरासीत्; तत्रमूल त्वमकारणकत्वम्, प्रकृतित्वंच कारणत्वम् ॥ ( स्व॰ ) ( अनात्मेति ) स र्वसारोपनिषत्स्थमिदम्, माया अनात्ममूलं आत्मभिन्नस्य सकलजडपदार्थ स्य कारणमित्यर्थः, तस्याब्रह्मणि विकारानापादकत्वमाह ( साचेत्यादि ) साचाकाशे मेघादिरिव ब्रह्मणि दृश्यते आकाशस्य मेघादिरिव सा ब्रह्मणोऽले पिका परिछिन्नाचेतिभावः, तथाच "पादोस्येति श्रुतिः, केयंमायेत्याशङ्क्याया माह ( मायानामेति ) ( अन्तवतीति ) ज्ञाननाश्येत्यर्थः, साच घटादिव्या वहारिकरूपतया प्रातिभासिकरजतादिरूपतयाच यथासङ्ख्यं प्रमाजनकेन्द्रिय सन्निकर्षादिरूप गुणजन्यज्ञानविषयः, अप्रमाजनकपित्तादिदोषजन्यज्ञानविष यश्चेत्याह ( प्रमाणाप्रमाणसाधारणेति ) सत्वाद्यभावफलितमाह ( अनि र्वाच्येति ) निर्वक्तुमशक्येत्यर्थः, सत्वादिविशिष्टस्यैवतत्वेन निर्वचनसम्भवा दितिभावः, तस्याः स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वरूपं मि थ्यात्वं दर्शयति ( अधिष्ठानइति ) तर्हितत्सत्वे किंमानमतआह ( अ न्तगिति ) अन्तर्वाणयः पण्डिताः, अन्तर्वाणिस्तुशास्त्रविदित्यमरः, तैर्विकल्पे

च्याऽधिष्ठान एवाविद्यमानान्तर्वाणिविकल्प निरूप्यमाणो च्चावच व्यवहारभेदवती या न वविद्यते वस्तुतस्सामाया तत्स्व रूपमज्ञानं तदेव मूलप्रकृति गुणसाम्यमविद्येत्याद्यनेकाकारा जगदाकारेण परिणता, "नासदासीन्नो सदासीत्तदानीम्,

न भूतेन्द्रियादिरूपेण निरूप्यमाणेत्यर्थः, अस्यैवार्थमाह ( नचेति ) उच्चा वचाः नानाविधायेव्यवहाराः शब्दप्रयोगास्तेषां ये भेदास्तद्वती माया प्रकृति प्रधानादिशब्दैः कार्यरूपेण भूतेन्द्रियादिशब्दैश्च व्यवह्रियमाणेत्यर्थः, व्यवहारा त्प्राप्तां सत्ताशङ्कां तन्नामनिर्वचनेन निराकरोति ( यानेति ) वस्तुतो या नविद्यते सामायेत्यन्वयः, इदंमायाशब्दफलितार्थकथनं नतुविग्रहः, यामा इति तद्विग्रहगतस्य निषेधार्थस्य माशब्दस्य स्थाने तत्पर्यायस्य नञोनिवेशात् तत्समासप्रवृत्तियोग्यविभक्त्यन्तानां तत्तत्समासघटकपदानां पृथक् प्रयोगरूपस्य वृत्त्यर्थाववोधकस्य वाक्यस्यैव विग्रहत्वात्, अत एव वाकालइवेति फलितार्थ कथनमिदं विग्रहस्तु वःकालोयस्येति वोध्यइति मनोरमादिग्रन्थस्सङ्गच्छते, तत्र वहुव्रीहिप्रवृत्तियोग्यप्रथमाया वामिसंज्ञेऽप्रयोगात्, या मा इति विग्रहे मायाशब्दनिष्पत्तिस्तु उदाक् अवाकेति विग्रहे उच्चावचादेशवत् मयूरव्यंस कादित्वात् यच्छब्दस्य यादेशेनबोध्या, मायायाः स्वरूपं नामानि कार्य्यंचाह ( तत्स्वरूपमित्यादिना परिणतेत्यन्तेन ) ( अनेकाकारेति ) अनेका भिधानेत्यर्थः, ( स्व० ) ( नासदासीदिति ) ऋक् अष्टक ८ अध्या० ७ वर्गा १७ अस्यवाक्यस्यग्रे "नासीद्रजो नोव्योमा परोयत् किमावरीवः कुह कस्य शर्मन्नम्भःकिमासीद्गहनं गभीरं ॥ १ ॥ नमृत्युरासीदमृतं नतर्हि नराऽया अन्ह आसीत्प्रकेतः ॥ आनीदवातं स्वधयातदेकं तस्माद्धान्यन्नपरः किंचनास ॥ २ ॥ तम आसीत्तमसागूढमग्रे प्रकेतं सलिलं सर्वमाइदं तुच्छेय्यनाभ्वपिहि तं यदासीत्तपसस्तन्महिना जायतैकम् ॥ ३ ॥ इत्यादिपाठोऽस्ति,अत्र "तपसस्त न्महिनाजायतैकामिति तृतीयऋक्तुर्थपादेन सृष्टिः प्रतिपादयिष्यते अधुना तु ततः प्राचीना निरस्तसमस्तप्रपंचा या प्रलयावस्था सा निरूप्यते तदानीं प्रल यदशायां, अवस्थितं यदस्यजगतोमूलकारणं तन्नासत् शशविषाणवन्निरूपाख्य न्नासीत्, नहि तादृशात्कारणादस्य जगतउत्पत्तिःसम्भवति, तथानोसत् नैवसत्, आत्मवत्सत्वेन निर्वाच्यमासीत्, यद्यपि सदसदात्मकं प्रत्येकंविलक्षणं भवति तथापि भावाभावयोस्सहावस्थानमपि न सम्भवति कुतस्तयोस्तादात्म्यमि त्युभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः, ननु नोसदिति पारमार्थिकसत्व

"अजामेकांलोहितशुक्लकृष्णांवह्वीःप्रजाःसृजमानां सरूपाः, देवात्मशक्तिंस्वगुणैर्निगूढां, "मायाचाविद्याचस्वयमेवभवति, "मायांतुप्रकृतिं विद्यान्मायिनंतुमहेश्वरम्, "अतोन्यदार्त्तं, "यदल्पंतन्मर्त्यं,

स्य निषेधस्तर्ह्यात्मनोपि अनिर्वाच्यत्वप्रसङ्ग इतिचेन्न, आनीदवातमिति तत्सत्वस्याग्रे वक्ष्यमाणत्वात्परिशेषान्मायाया एवात्रसत्वं निषिध्यत इतिभावः, अग्रिमऋचामर्थस्तु सायणाचार्यभाष्येद्रष्टव्यः, विस्तरभयान्नेह लिख्यते, इति ( स्व० ) ( अजामेकामिति ) श्वेता० अ० ४ अस्या उत्तरार्द्धन्तु अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्य इति अजामेकामिति अजांप्रकृतिलोहितशुक्लकृष्णांतेजोवन्नलक्षणां वह्वीः प्रजाःसृजमानामुत्पादयन्ती ध्यानयोगानुगतदृष्टां देवात्मशक्तिं सरूपां समानाकारां अजोह्येको विज्ञानात्मा अनादिकामकर्म्मविनाशितः स्वयमात्मानंमन्यमानो जुषमाणः सेवमानोनुशेते भजते वा अन्य आचार्योपदेशावसादिताविद्यान्धकारो जहाति त्यजति ( शं० भा० ) ( देवात्मशक्तिमिति ) श्वेताश्वतरस्थमिदम्' ततःपूर्वं "ते ध्यानयोगानुगता अपश्यन्निति पाठः, तथाचायमर्थः ते ब्रह्मवादिनः ध्यानंनाम चित्तैकाग्र्यं तदेव योग उपायः तमनुगताः समाहिता इत्यर्थः, देवात्मशक्तिं देवस्य द्योतनादियुक्तस्य मायिनो महेश्वरस्य परमात्मनः आत्मभूतां अस्वतंत्रां नतुसाङ्ख्यपरिकल्पितप्रधानमिव पृथग्भूतां स्वतन्त्रां ईदृशीं शक्तिं जगदुत्पत्तौ सहकारिकारणत्वेन अपश्यन्दृष्टवन्तः कीदृशींशक्तिं स्वगुणैः प्रकृतिकार्य्यभूतैः पृथिव्यादिभिश्च निगूढां संवृताम् कार्य्याकारेण कारणस्याभिभूतत्वात्कार्य्यात्पृथक् स्वरूपेणोपलब्धुमयोग्यामित्यर्थः, ( आशंकरभाष्यगता ) ( मायाचाविद्याचेति ) नृसिंहोत्तरतापिनी ख० ९, स्वयमेकैव जडशक्तिः ईश्वरोपाधितया माया पदवाच्या भवति, जीवो पाधितया अविद्यापदवाच्या भवति मायायाः स्वाश्रयाव्यामोहकत्वं अविद्यायास्तु तद्व्यामोहकत्वमित्यपि तयोर्भेदः, ( स्व० ) ( मायान्तुप्रकृतिमिति ) श्वेता० अ० ४ तुशब्दोऽवधारणे प्रकृतिः तत्रतत्र जगत्प्रकृतित्वेनोक्ता या तां मायामेव विद्यात्, जानीयात् महेश्वरं तत्रतत्र परमेश्वरत्वेनयउक्तस्तं मायिन मायायाः सत्तास्फूर्त्यादिप्रदतयाधिष्ठानत्वेनैव प्रेरयितारं विद्यादित्यर्थः, ( स्व० )( अतोन्यदार्त्तमिति ) वृ० अ० ३ ब्रा० ५ अतोस्मादुक्तरूपादात्मनोन्यदार्त्तःविनाशि रज्जुसर्पादिवन्मिथ्याभूतमितियावत् ( मि० ) ( यदल्पंतन्मर्त्यमिति ) छा० अ० ७ यदल्पंतन्मर्त्यम् विनाशीत्यर्थः, अल्पशब्दार्थस्तु छान्दोग्यएव "यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्प

"नाल्पेसुखमस्ति, इत्यादिश्रुतिभ्यः, अत्र तमोऽविद्यादिशब्दै र्ज्ञाननिवर्त्यत्वमनात्मनो लक्षणमुक्तं भवति, तत्र मानन्त्वहमज्ञ इत्यनुभवमात्रम्, नतूदाहृतश्रुतयः, तासामग्निर्हिमस्यभेषजमिति वदपूर्वत्वाभावात्, सू० अप्राप्तेशास्त्रमर्थवदिति पूर्वतंत्रन्यायात्, नन्वत्र नोसदासीदिति सद्रूपस्यात्मनोपि निषेधात्कथं तस्याना दित्वसिद्धिरितिचेन्न, अत्रत्यसत्वाऽसत्वनिषेधस्य जगदुपादा नकारणभूतमूलतमोविषयत्वात्तदानीं प्रलयकालेतमस्साक्षितया विद्यमानस्य तस्य निषेधायोगाच्च, अन्यथाऽसाक्षिकस्य तम सोप्यासिद्धिप्रसंगःस्यात्, एतेन शून्यवादोपि निरस्त इति मन्त व्यम् ॥ सच एकएव स्वावस्थाभेदेन प्रकृतिमायाशक्त्याद्यनेकश ब्दवाच्यो भवति, तस्यैकत्वेचोक्तश्रुतय एव प्रमाणम्, "इन्द्रोमाया भिः पुरुरूपईयतइति बहुत्वंतु स्वकार्यापेक्षयेतिबोध्यम् ॥ अनयोरा त्मानात्मनोरितरेतराध्यासादहमिदं ममेत्यादिसर्वे वैदिका लौ

मिति श्रुत्यापूर्वमुक्तः तदर्थस्तु यत्राविद्याविषयेऽन्योऽन्येनान्यत्पश्यति अन्यच्छृणो त्यन्यद्विजानाति तदल्पंपरिछिन्नं अविद्याकालभावीत्यर्थः, यथास्वप्नदृश्यं वस्तु प्राक्प्रतिबोधात्तत्कालभावि तद्वत्, इति ( छा० मि० ) ( नाल्पेसुखमस्तीति ) छा० अ० ७ इतः पूर्वं "योवैभूमातत्सुखमिति पांठाः, योवै भूमा महान्निरतिश यस्तत्सुखं यत्भूम्नोर्वाक् सातिशयत्वाच्चदल्पम् तस्मिन्नल्पे सुखं नास्ति अल्प स्याधिकतृष्णाहेतुत्वात् तृष्णाच दुःखवीजम् अतः परमाख्यो भूमैव सुखम्, ( छ० मि० ) ( अग्निर्हिमस्यभेषजमिति ) इयंमाध्यन्दिनीयसंहितात्रयोविं शाध्याय दशममन्त्रस्था, "किंस्विद्धिमस्यभेषजामिति ब्रह्मणापृष्टेन होत्रोक्तमु त्तरमिदमग्निर्हिमस्येति स्पष्टोर्थः ॥ नन्वपूर्वत्वाभावेप्युदाहृतश्रुतीनामज्ञानवो धकत्वमस्त्वित्याशंक्याह ( अप्राप्तइति ) जैमिनि सूत्रं अप्राप्तार्थबो धकत्वे शास्त्रस्यार्थवत्वं नोचेदनुवादकत्वमिति भावः ॥ ( इन्द्रोमायाभि रिति ) बृ०अ० २ ब्रा० ५ इन्द्रः परमेश्वरो मायाभिरिति बहुवचनं विक्षेपाणां बाहुल्यात् मायाभिर्मायया नामरूपविषयमिथ्याभिमानात्मनापरि णतयापुरुरूपो बहुरूप ईयते प्रतीयते मिथ्यैव जले सूर्य्यवत् ( बृ० मि )

किकाश्च व्यवहाराःप्रवृत्ताः, "नीहारेण प्रावृता जल्प्याचासुतृप उक्थशासश्चरन्ति, एकःशत्रुर्नद्वितीयोस्ति शत्रुरज्ञानतुल्यः पुरुष स्यराजन् ॥ येनावृतःकुरुते संप्रमत्तो घोराणिकर्माणिसुदारुणानि॥ इत्यादिश्रुतिस्मृतिभ्यः । नचात्मनःप्रमातृत्वादध्यासमन्तरेण व्यवहारोपपत्तिरिति वाच्यम्, देहेन्द्रियादिष्वहंममाभिमानरहित स्यासङ्गस्यात्मनः प्रमातृत्वानुपपत्तेः, तथाहि प्रमातृत्वंनाम प्रमाश्रयत्वं प्रमायाः वृत्तिरूपत्वे वृत्तेर्जडत्वेन जगदान्ध्यप्रसङ्गस्स्यात्, चैतन्यरूपत्वे स्वस्य स्वाश्रयत्वासम्भवेनात्मनः प्रमातृत्वं न स्यात्, करणवैयर्थ्यप्रसङ्गश्चस्यात्, तस्माद्वृत्त्युपहितचैतन्यमेव प्रमेत्यङ्गीकार्य्यम्, तदाश्रयत्वंचाऽसङ्गस्यात्मनो वृत्तिमदन्तःकरणतादात्म्याध्यासमन्तरा न सम्भवतीत्यतोऽस्य प्रमातृत्वसिध्यर्थमध्यासोऽङ्गीकर्त्तव्यः, किंचाध्याससत्वे व्यवहारस्तदभावे सुषुप्तौ तदभाव इत्यन्वयव्यतिरेकाभ्यामध्यासमूलो व्यवहार इति निश्चीयते, अन्यथा व्यवहारलोपः स्यात्, नन्वा

( नीहारेणप्रावृतेति ) माध्यन्दिनीयसंहितासप्तदशाध्यायैकविंशत्तममन्त्रोत्तरार्द्धमिदम्, उक्थशामः उक्थं सामविशेषः तं शंसन्ति कथयन्त्यनेनस्तुवन्तिवा उक्थशासः कर्म्मणिश्चरन्ति लोकाल्लोकान्तरं गच्छन्ति कीदृशाः नीहारेण तत्सादृश्यादज्ञानेनाच्छन्नाः नीहारो नात्यन्तमसत् दृष्टेरावरकत्वात्, नात्यन्तंसत् काष्ठपाषाणादिवत्सम्बोद्धुमयोग्यत्वात्, एवमज्ञानमपि नात्यन्तमसत् आत्मतत्वावारकत्वत्, नापिसन् बोधमात्रनिवर्त्यत्वात्, ईदृशेनाज्ञानेन सर्वे प्रावृताः पुनः कीदृशाः जल्प्याच जल्पनंजल्पिः तया देवोहं मनुष्योहमित्याद्यनृत जल्पनेनच प्रावृताः पुनःकीदृशाः असुतृपः केनाप्युपायेन असून् प्राणानेवतृप्यन्ति तर्प्पयन्ति नतुआत्मतत्वंविचारयन्तीत्यसुतृपः प्राणतर्प्पणमात्रेणात्मनः कृतार्थतां मन्यमाना इत्यर्थः, उक्थशास इत्यत्र शंसुस्तुतावित्यतोमन्त्रे श्वेतवहोक्थशस्पुरोडाशोण्विन् अत्रैव निपातनान्नलोपःअतउपधायाइति उपधावृद्धिः जल्प्येति इणजादिभ्यइतिइण् (स्व०) ( एकःशत्रुरिति ) व्यासोक्तिः संक्षेपशारीरकेप्युदाहृतोयंश्लोकः, ३ २ १ ॥येनाज्ञानेनावृताः प्रच्छन्नः पुरुषः संप्रमत्तः कार्याकार्यधीविकलः घोराण्यतिगर्हितानि ब्रह्मवधादिनि सुदारुणानि ज्ञानंविनाप्रती

त्मानात्मनोस्तमः प्रकाशवद्विरुद्धस्वभावयोः कथं परस्पराध्यासो भवितुमर्हति, नहि प्रकाशस्य तमोधिष्ठानत्वं, तमसोवा प्रकाशाधिष्ठानत्वं दृष्टमितिचेन्न, अहमज्ञ इति प्रतीतावाधाराधेयभावेन प्रतीयमानयोस्तयोर्विरोधाभावेन परस्पराध्याससम्भवात्, अन्यथाहमज्ञइति प्रतीतिर्नस्यात्, नहि विरुद्धयोराश्रयाश्रयिभावोदृष्टः, नहि प्रतीत्यपलापः कर्तुंशक्यः, किंच परिपूर्णपरमात्मनोऽन्यत्राज्ञानस्य वृत्त्यलाभादपि तस्य तदाश्रयत्वमङ्गीकार्यम्, उक्तंच आश्रयत्वविषयत्वभागिनी निर्विभागाचितिरेवकेवला ॥ पूर्वसिद्धतमसोहि पश्चिमो नाश्रयोभवति नापिगोचरइति, अध्यासोनाम अतस्मिंस्तद्बुद्धिः, सच द्विविधः स्वरूपाध्यासः संसर्गाध्यासश्चेति, तत्राद्यो यथा मन्दान्धकारावृतेरज्जौ सर्पाद्यध्यासः तथाऽज्ञानावृते आत्मनि प्रथममहङ्काराध्यासः, ततः ममेदमिति ममताद्यध्यासः द्वितीयस्तु यथा शुद्धस्फटिके जपाकुसुमादिसान्निध्याल्लोहितः स्फटिक इति रक्तताध्यासः, तथाऽहंकारादावात्मसान्निध्यादस्तिताद्यध्यासो भवति, एतदभिप्रायेणैव सरस्वतीरहस्योपनिषदि "अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकं आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततोद्वयमित्युक्तम् ॥ अत्र यथासर्पाध्यासे रज्ज्वावारका

काराक्षमानि अवश्यं फलानि ज्योतिष्टोमादीनि कुरुते इतिसंवन्धः॥(आश्रयत्वविषयत्वेति ) संक्षेपशारीरकस्थोयंश्लोकः ३१९, अज्ञानस्येतिशेषः, अज्ञानस्याश्रयत्वं विषयत्वंच भजत इत्याश्रयत्वविषयत्वभागिनी केवलाऽद्वितीया अतएव निर्विभागा जीवेश्वरविभागरहिता चितिरेव हि यतः पूर्णब्रह्मैव पूर्वसिद्धतमसःजीवेश्वरविभागात्पूर्वसिद्धस्य जीवेश्वरविभागसत्वप्रयोजकस्याज्ञानस्य ततःपश्चिमस्तत्प्रयोज्यो ब्रह्मविभक्तो जीवस्तद्विभक्तं ब्रह्मच यथाक्रमं नाश्रयो भवति नापि गोचरः, यद्यपि जीवेश्वरविभागादिरनादिस्तथापि स न वास्तवः मायिकस्तु सोऽद्वयब्रह्मानवभासदशायामेवभवतीतिभावः(अस्तिभातीति) अस्तीतिसत्तोच्यते भातीतिभानं प्रियमित्यानन्दः रूपमिति घटपटादिव्यक्तिःनामेति सञ्ज्ञा तथाच सच्चिदानन्दरूपे परमात्मनि प्रतीयमानसत्ताभानानन्दरूपनामात्मकवस्तुपञ्चकमध्ये आद्यन्त्रयमधिष्ठानात्मकब्रह्मरूपं अन्त्यद्वयन्तु प्रपञ्चरूपमित्यर्थः, तत्रसत्तादित्रयमधिष्ठानरूपस्यब्रह्मणः प्रपञ्चेन संसर्गाध्यासवशात्घटादौ भातिनामरूपा

ऽज्ञानस्य कारणत्वं तथाऽहंकाराद्यध्यासे आत्मावारकाऽज्ञानस्य कारणत्वं, यथावा सर्पाध्यासे पूर्वदृष्टसंस्कारस्य कारणत्वं तथा उत्तरोत्तराध्यासंप्रति पूर्वपूर्वजन्मानुभूताहंकारादिसंस्कारस्यापि कारणत्वं बोध्यं, ननु प्राथमिकाध्यासे संस्काराभावादध्यासासम्भव इतिचेन्न, अध्यासप्रवाहस्य बीजाङ्कुरवदनादित्वेन प्राथमिकाध्यासाभावात्, नन्वन्यत्र सत्यत्वेन प्रसिद्धस्य सर्पादेः सत्यसंस्कारवशादध्यासोदृष्टः त्वन्मतेत्वात्मातिरिक्तप्रपंचस्य मिथ्यात्वेन सत्यसंस्कारस्याध्यासकारणस्यासंभवादध्यासोनुपपन्न इति चेन्न, केनचिन्मायाविना प्रदर्शितमिथ्यासर्पमुद्दिश्य केनचित्पुरुषेण सर्पस्वरूपगुणज्ञानशून्यस्य पुरुषान्तरस्यायं सर्पोनेन दृष्टःपुरुषो मृत्युमेतीत्युपदिष्टस्य तज्जनितमिथ्यासंस्कारेणापि जायमानसर्पाद्यध्यासे व्यभिचारदर्शनात्, सत्यसंस्कारस्य गौरवपराहतत्वेनातन्त्रत्वाच्च, ननु प्रत्यक्षविषये रज्ज्वादौ सर्पाद्यध्यासो दृष्टः आत्मनस्त्वप्रत्यक्षत्वात्कथं तत्राध्यासो युज्यत इति चेन्न, अप्रत्यक्षेप्याकाशे नीलिमाध्यास दर्शनादात्मनस्त्वस्मत्प्रत्ययगम्यत्वेनापरोक्षत्वाच्च, "यत्साक्षादपरोक्षाद्ब्रह्मे त्यादिश्रुतेः, ननु स्वेतरस्मिन् रज्ज्वाद्यधिष्ठाने स्वेतरसर्पाद्यध्यासो दृष्टः आत्मनस्त्वध्यासकर्तृपुरुषाऽभिन्नत्वेन स्वस्य स्वातिरिक्ताध्यासाधिष्ठानत्वासंभवादध्यासानुपपत्तिरितिचेन्न, स्वप्नप्रपंचाध्यासवत्तदुपपत्तेः, तथाहि यथातूलाविद्यात्मकनिद्रावृतः पुरुषः स्वप्नावस्थां गतस्सन्स्वस्मिन्नेव स्वयमेव रथतुरगादिकमध्यस्य स्वयंच देवोवा राजावा भूत्वा स्वाध्यस्तरथमारुह्य स्वाध्यस्तराक्षसमानुषादिभिर्युद्धादिकं करोति तथा मूलाज्ञानावृतः पुरुषः स्वस्मिन्नेव स्वयमेवाऽहङ्कारादिप्रपंचमध्यस्य देवमनुष्यतिर्यगादियोनिं सम्प्राप्य सर्वान्व्यवहारान्करोतीत्यनवद्यम्, नह्यस्य स्वप्न

त्मकजगद्रूपन्तुब्रह्माणि स्वरूपेणाध्यासाच्चेनसहैव भाति नतेनविनेतिभावः(स्व०)
(यत्साक्षादिति) बृ०अ०३ ब्रा०४ अत्रापरोक्षादिति व्यत्ययेन प्रथमार्थे पंचमी तेन यद्ब्रह्म साक्षात्स्वरूपतएव अपरोक्षं नतु घटादिवद्वृत्तिव्याप्यत्वेन,(वृ० मि०)॥

प्रपंचस्य पूर्वानुभूतपदार्थविषयकस्मृत्यात्मकत्वंकल्पयितुं शक्यम्, स्वप्नोत्थितस्य पुरुषस्य स्वप्ने रथतुरगादिकमद्राक्षमिति तेषामनुभवविषयत्वेनानुसन्धीयमानत्वात्, रथादिकं स्मृतवानिति स्मृतिविषयत्वेनाननुसन्धीयमानत्वात् "नतत्ररथा नरथयोगा नपन्थानो भवन्त्यथरथान् रथयोगान्पथः सृजते, सू० सन्ध्येसृष्टिराह हि, निर्मातरंचैकेपुत्रादयश्च, मायामात्रन्तु कात्स्न्येंनानभिव्यक्तस्वरूपत्वादित्यादिश्रुतिसूत्राभ्यामनिर्वचनीयरथादिसृष्टिप्रतिपादना

( नतत्ररथाइति ) बृ० अ० ४ ब्रा० ३, इयं श्रुतिः स्वप्न पदार्थानां वासनामात्रनिर्म्मितत्वेन मिथ्यात्वं ब्रूते, तत्र स्वप्ने रथाः प्रसिद्धाः रथैर्युज्यन्ते इति रथयोगा अश्वादयः पन्थानो मार्गा न भवन्तीति प्रत्येकं सम्वध्यते नसन्ति अथापि रथान् रथयोगान् पथो वासनात्मकान्सृजते, इति ( बृ० मि० ) सन्ध्येसृष्टिरिति ) इमानिव्याससूत्रतृतीयाध्यायाद्वितीयपादस्था नि त्रीणिसूत्राणि, तत्र "नतत्रेत्यादिश्रुतौ किंस्वप्नसृष्टिर्घटादिवद्व्यावहारिकी उत शुक्तिरजतादिवन्मायामात्रमिति संशये पूर्वपक्षसूत्रं ( सन्ध्यइति ) सध्ये जाग्रत्सुषुप्त्योःसन्धौ भवे स्वप्ने सृष्टिर्व्यावहारिक्येव हि तथः श्रुतिरेवमाह "अथरथान्रथयोगान्पथःसृजतइति, ( निर्मातारमिति ) किञ्चैकेशाखिनोऽस्मिन्नेव स्वप्ने कामानां निर्मातारं तथा जीवमिव परमात्मानमामनन्ति "यएषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाण इति, एषु चक्षुरादिकरणेषु निर्व्यापारेष्वित्यर्थः, ननु श्रुतौ कामानां बुद्धिवृत्तिविशेषाणां निर्माता परमात्मेति श्रूयते नार्थनिर्मातेत्यत आह ( पुत्रादयश्चेति ) काम्यन्त इति व्युत्पत्त्या पुत्रादयएव कामा इत्यर्थनिर्मातृत्वं परमात्मन इत्यर्थः, तथाच स्वप्नसृष्टिः सत्या ईश्वरकर्तृकत्वात् क्षित्यादिवत्, इत्यनुमानं सूत्रेणोक्तं तस्माच्छ्रुत्यनुमानाभ्यां स्वप्नसृष्टिस्सत्येति प्राप्ते प्रत्याह ( मायामात्रन्त्विति ) तुः पूर्वपक्षनिरासार्थः स्वप्नसृष्टिर्मायामात्रं शुक्तिरजतवत् कुतः कार्त्स्न्येन उचितदेशकालादिसंपत्त्या बाधाभावेन चानभिव्यक्तस्वरूपत्वात्, नहि रथादीनामुचितदेशस्स्वप्ने सम्भवति देहान्तर्नाडीप्रविष्टमनोवच्छिन्नसाक्षिनिष्ठत्वात्, नाप्युचितः कालोस्ति घटिकामात्रवर्तिनि स्वप्ने वहुसंवत्सरसाध्यसंसरणस्य दर्शनात् , तस्मात्प्रातिभासिक एव स्वप्नप्रपञ्चः, यदुक्तं "अथरथान् रथयोगान्पथः सृजतइतीश्वरकर्तृकां सृष्टिंश्रुतिराहेति सृष्टेस्सत्यत्वमिति तत् श्रुत्यैव "नतत्ररथा नरथयोगा नपन्थानो भवन्तीत्यादिकया स्वप्ने रथाद्यभाववोधिकया परिहृतम्, अनुमानेचोचितदेशादिजन्यत्वमुपाधिः हेत्वसिद्धिश्च,

च, यदि तस्य स्मृतिरूपत्वंतर्हि पूर्वदिने देशान्तरगतो भ्राता मया स्मृतइतिवत्स्वप्ने रथादिकमपि स्मृतमित्येव व्यवहारः प्रसज्येत तस्मान्नतस्य स्मृत्यात्मकत्वम्, येतु तावत्स्वप्नपदार्थानामीश्वरसृष्टत्वं सत्यत्वंचेच्छन्ति ते सर्वलोकोपहासोपकरणभूता इत्युपेक्ष्याः ॥ नन्वन्यत्र प्रसिद्धस्यान्यत्राध्यासो दृष्टः ब्रह्मणोन्यत्र प्रपंचस्याप्रसिद्धत्वादध्यासोनुपपन्न इतिचेन्न, चन्द्रादन्यत्राप्रसिद्धस्य चन्द्रान्तरस्य चन्द्रेऽध्यासदर्शनात्, गुरुतरभारेणात्यन्तदुःखिनां भारवाहिनां भारापगमोत्तरक्षण एवाहं सुखी त्यात्मनोन्यत्राप्रसिद्धस्य सुखस्यात्मन्यध्यासदर्शनाच्च; न हि तदानीं तेषां सुखलेशोप्युपपद्यते, प्रस्वेदप्रवाहोर्ध्वश्वासादिदुःखलिंगानां स्पष्टत्वात्, तस्मादात्मानात्मनोरध्यासो नैसर्गिक इति सिद्धम्, "अयमेवाध्यासो दुःखहेतुर्बन्ध इत्युच्यते, अस्यैवानर्थहेतोःसमूलस्य बन्धात्मकस्य नित्य शुद्धबुद्धमुक्तस्वरूपात्मज्ञानान्निवृत्तिर्मुक्तिरित्युक्ता ॥ "तरति शोकमात्मवित्, ॥ "तमेव विदित्वातिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय, "तमेवं विद्वानमृत इह भवति नान्यःपन्था विद्यतेऽयनाय, "तमेवैकं

अस्यन्तरे "सहिकर्त्तेति, "स्वयन्निहत्य स्वयंनिर्माय स्वेनज्योतिषा प्रस्वपितीति च स्वप्नसृष्टेर्जीवकर्तृकत्वश्रवणात्, स्वयन्निहत्य पूर्वदेहं निश्चेष्टं कृत्वा स्वयं निर्माय अपूर्वं स्वप्नदेहं संपाद्य स्वेनभासा स्वीयान्तःकरणवृत्त्या स्वेनज्योतिषा स्वरूपचैतन्येनचेत्यर्थः, तथाच "कामंकामं पुरुषो निर्मिमाण इत्यत्रापि जीवएव निर्माता ज्ञेयः, ( व्याससूत्रवृत्तिव्र० )( तरतिशोकमिति ) छा० अ० ७ खण्ड ३ आत्मानंवेत्तीत्यात्मावित् शोकंमनस्तापं अकृतार्थबुद्धितांतरति अतिक्रामतीत्यर्थः(मि०)(तमेवविदित्वेति)श्वेता० अ० ६ तंपरमेश्वरं विदित्वैव आत्मतयासाक्षा त्कृत्यैव जननमरणसंसारहेतुभूतं अविद्याख्यं मृत्युं अत्येति अतिक्रामति परंब्रह्म प्राप्नोति अयनायमोक्षाय अन्यः ज्ञानादन्यःपन्थामार्गोनविद्यतेनास्तीत्यर्थः;अत्र व्यवहिताश्चेति सूत्रेण अतिशब्दस्य व्यवहितप्रयोगः;(स्व०) ( तमेवं विद्वानिति ) इदंतैत्तरीयब्राह्मणस्थम्, अस्यार्थस्तु तमेवविदित्वेत्यनेनसमानः,

ज्ञानथ आत्मानमन्यवाचोविमुंचथ अमृतस्यैष सेतुः, "भिद्यतेहृदय ग्रन्थिः छिद्यन्ते सर्वसंशयाः क्षीयन्तेचास्य कर्म्माणि तस्मिन्दृष्टे परावरे, "तन्दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गव्हरेष्ठं पुराणं अध्यात्मयोगाधिगमेनदेवं मत्वा धीरो हर्षशोकौ जहाति, "तमेव धीरो विज्ञाय प्रज्ञांकुर्वीत ब्राह्मणः नानुध्यायाद्बहून् शब्दान् वाचोविग्लापनं हि तत्, "ज्ञानादेवहिकैवल्यं, "देहात्मज्ञानवत् ज्ञानं देहात्मज्ञानबाधकं आत्मन्येव भवेद्यस्य सनेच्छन्नपि

( तमेवैकंजानथेति ) मुण्डकस्थेयम्, शौनकः शिष्यान्प्रत्याह हेशिष्याः सविलासां प्रकृतिं मायाख्यां तर्काग्निना विलाप्य तमेवाधिष्ठानभूतं एकमद्वयमात्मानं विजानथ विजानीत ज्ञात्वाचान्यावाचः अपरविद्यारूपा विमुंचथ विमुंचत परित्यजत एषआत्मसाक्षात्कार अमृतस्य अमृतत्वस्य सविलासाविद्यानिवृत्तिलक्षणस्य सेतुः संसारमहोदधेरुत्तरणहेतुत्वात्, ( शं॰ भा॰ ) ( भिद्यतेहृदयेति ) मुण्डकस्थेयंपरमात्मज्ञानफलप्रतिपादिकाश्रुतिः । अस्य जीवस्य हृदयग्रन्थिः अविद्यावासनाप्रचयोबुद्ध्याश्रयः भिद्यते विनश्यति तथा सर्वे ज्ञानविषयाः संशयाः छिद्यन्ते तथा विज्ञानोत्पत्तेः प्राक्तनानि अप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च कर्माणि क्षीयन्ते कदैवंभवतीत्यपेक्षायामाह ( तस्मिन्निति ) परंकारणं अवरंकार्यं तदधिष्ठानत्वात्तद्रूपे तस्मिन्परमात्मनि साक्षादहमस्मीति दृष्टेसतीत्यर्थः, ( स्व॰ ) ( तंदुर्दर्शमिति ) कठोपनिषत्स्थेयम्, दुर्दर्शं सूक्ष्मत्वाद्दुर्ज्ञानं अत एव गूढं अज्ञातं अनुप्रविष्ट आछादितरूपेण विद्यमानं कुत्रेत्यत आह ( गुहेति ) गुहायां बुद्धावाहितं निक्षिप्तं गव्हरे बहुविधानर्थसङ्कटे देहे स्थितं पुराणं चिरन्तन तमीश्वरमध्यात्मयोगः प्रत्यगात्मन्येवचित्तसमाधानं तत्सहकृताहाक्यादधिगमस्साक्षात्कारः तेन सोहमेवेति निश्चित्य धीरो विद्वान्हर्षाद्युपलक्षितं संसारं जहातीत्यर्थः ॥ ( ब्र॰ ) ( तमेवधीरइति ) वृ॰अ॰ ४ ब्रा॰४ धीरो धीमान्ब्राह्मणस्तमेवोक्तरूपमात्मानं विज्ञाय पदार्थ शुद्धिंसंपाद्य शास्त्रत उपदेशतश्च प्रज्ञा वाक्यार्थभूतामशेषशोकाकाङ्क्षाशान्तिलक्षणां स्वरूपाभिव्यक्तिरूपां मोक्षसंपादिकां कुर्वीत संपादयेत् बहुशास्त्राध्ययने दोषमाह ( नेति ) वहून् प्रभूतान् शब्दान् नानुध्यायान्नानुचिन्तयेत् कुतो हि यस्माद्बहुशब्दाध्ययनं वाचो वागिन्द्रियस्य विग्लापनं विशेषेण ग्लानिकरं श्रमकरम्, ( वृ॰ मि॰ ) ( ज्ञानादेवहिकैवल्यमिति ) स्पष्टोर्थः, ( देहात्मेति ) वराहोपनिषत्स्थमिदम्, सनेच्छन्नपि मुक्तिमनिच्छन्नपि मुच्यते मुक्तोभवति कर्म्मकर्त्तरिलट् सः

मुच्यते, "अहंब्रह्मेति नियनं मोक्षहेतुर्महात्मनां, "नाहंब्रह्मेति जानाति तस्यमुक्तिर्नजायते, "ज्ञात्वादेवं सर्वपाशापहानिः, "यदा चर्मवदाकाशं वेष्टयिष्यन्तिमानवाःतदाशिवमविज्ञायदुःखस्यान्तो भविष्यति, "अशरीरंशरीरेष्वनवस्थेष्ववस्थितं महान्तं विभुमात्मानं मत्वाधीरोनशोचति अशरीरंवावसन्तंनप्रियाप्रियेस्पृशतः,

कः यस्य आत्मन्येव परमार्थभूते सच्चिदानन्दरूपे ब्रह्मण्येव ज्ञानं अहंब्रह्मास्मीति स्वाभेदज्ञानं भवेत् किंवत् देहात्मज्ञानवत् देहे आत्मज्ञानं मनुष्योऽहं स्थूलो गच्छामीत्याद्याकारं यथानिश्चयरूपं तथेत्यर्थः, ज्ञानसामान्यस्य मुक्तिहेतुत्वाभावात्तद्विशिनष्टि ( देहात्मज्ञानबाधकमिति ) तेन घटादिज्ञानव्यावृत्तिः तस्य देहात्मज्ञानाबाधकत्वादितिभावः ( स्व० ) ( अहम्ब्रह्मेति ) ( नाहम्ब्रह्मेतिच ) पैङ्गलोपनिषच्चतुर्थाध्यायस्थे, ज्ञानमितिशेषः, अहंब्रह्मास्मीत्याकारकं अभेदज्ञानं महात्मनां साधनचतुष्टयसम्पन्नानां मुमुक्षूणां नियमेनाव्यभिचारेण मोक्षस्य हेतुर्भवति यस्तु मूढः अहंब्रह्मेति नजानाति तस्य मुक्तिर्नभवतीत्यर्थः ॥ ( स्व० ) ( ज्ञात्वादेवमिति ) श्वेताश्वतरस्थमिदम्, देवं स्वप्रकाशमीश्वरमहन्त्वेन साक्षात्कृत्य सर्वपाशानां मिथ्याज्ञानरागादीक्लेशानामपहानिः क्षयो भवतीत्यर्थः, ( व्र० ) ( यदाचर्म्मवदिति ) श्वेताश्वतरस्थमिदम्, मानवाः मनुष्याः चर्म्मवत् यथाचर्म व्याघ्रहरिणादिचर्म वेष्टयते सङ्कोच्यते धार्यते वा तथेत्यर्थः, यदा आकाशं वेष्टयिष्यन्ति सङ्कोचयिष्यन्ति धारयिष्यन्तिवा तदा शिवं पूर्वोक्तनिष्कलत्वादिलक्षणं परमात्मानमविज्ञाय आत्मत्वेनाज्ञात्वापि दुःखस्य आध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिविधस्य अन्तःआत्यन्तिकोध्वंसो भविष्यति आकाशस्यामूर्त्तस्य सङ्कोचनं धारणं वा यथाकदापि न संभाव्यते तथात्मज्ञानं विना मुक्तिरसंभावितेति भावः, ( स्व० ) ( अशरीरमिति ) कठोपनिषद्द्वितीयवल्लीस्थेयं, अशरीरं स्थूलादिशरीरत्रयाद्भिन्नं तत्रहेतुः अनवस्थेष्वनित्येषु शरीरेष्वनेकेष्ववस्थितं नित्यमेकं तत्रैवहेत्वन्तरं महान्तमिति व्यापिनमित्यर्थः, तत्रापेक्षिकं महत्वंवारयति ( विभुमिति ) मन्तृमन्तव्यभेदंप्रत्याह ( आत्मानमिति ) ईदृशमात्मानं मत्वाज्ञात्वा धीरःसन् ज्ञानीसन् नशोचति शोकोपलक्षितं संसारं नानुभवतीत्यर्थः, ( स्व० )(अशरीरंवावेति ) छ० अ० ८ ख० १२ छान्दोग्ये इतः पूर्वमज्ञस्य देहसम्बन्धद्वारा संसारित्वमुक्तं अनया तु तस्यैव स्वज्ञानवतो देहसम्बन्धनिवृत्तिद्वारा मुक्तिर्दर्श्यते वावेत्यव्ययमवधार

"आनन्दंब्रह्मणो विद्वान्नबिभेति कुतश्चनेति, "यदासर्वे प्रमुच्यन्ते कामा येऽस्यहृदिश्रिताः अथमर्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुते, "योवैभुमा तदमृतमित्यादिश्रुतेः, यथैधांसिसमिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥ ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ज्ञानेनतुतदज्ञानं येषांनाशितमात्मनः ॥ तेषामादित्यवज्ज्ञानं प्रकाशयतितत्परमित्यादिस्मृतेश्च ॥ उक्तंचभगवता भाष्यकृता अज्ञानंतस्यमूलंस्यादिततिद्धानमिष्यते ॥ ब्रह्मविद्यातआरब्धाततोनिःश्रेयसंभवेदिति ॥ एतेन भक्तिरूपापन्नमेवापरोक्षज्ञानं मोक्षसाधनमित्यवैदिकाधुनिककल्पनं निरस्तम्,

णार्थकम्, अशरीरं निवर्त्तितशरीरत्वभ्रमं सन्तं प्रियाप्रिये वैषयिकसुखदुःखे न वाव नैव स्पृशत इत्यर्थः, सुखदुःखे धर्माधर्मकार्ये तौच शरीरकार्य्यौ आत्मज्ञानिनश्च शरीरसम्बन्धाभावेन तत्प्रयुक्तधर्माधर्मसम्बन्धाभावेन तद्धेतुकसुखदुःखाभाव इतिभावः, ( छां० मि० ) ( आनन्दंब्रह्मणइति ) तैत्तरीयोपनिषदानन्दवल्लीस्थमिदम्, ब्रह्मणोरूपमानन्दं विद्वान् कुतश्चन नविभेति निमित्ताभावात् नहि विदुषोन्यद्वस्त्वस्ति यतो बिभियात् ( नारायणीदीपिका ) ( यदासर्वेइति ) इदंकठोपनिषदन्त्यवल्लीस्थम्, अस्य परमार्थदर्शिनः यदा हृदि वुद्धौ श्रिताः प्राक्प्रतिवोधात् स्थिताः सर्वे कामाः आभिलाषाः वित्तंमेस्याज्जायामे स्यात् स्वर्गोमेस्यादिसाद्याः परमानन्दव्रह्मप्राप्तेस्तुच्छानन्देच्छानिवर्त्तकत्वात्प्रमुच्यन्ते विशीर्यन्ते अथ अतो हेतोः तदा मर्त्यः प्रवोधात्प्राक् मरणधर्मापि सःप्रवोधोत्तरकाले अविद्याकामकर्मलक्षणस्य मृत्योर्विनाशादमृतो मुक्तो भवति अत्रेहलोकएव नतु ब्रह्मलोकादौ तद्गमनप्रयोजकस्य अविद्याकामलक्षणस्य मृत्योर्विनष्टत्वाद्ब्रह्मसमश्नुते प्राप्नोति ब्रह्मैव भवतीत्यर्थः, ( स्व० )( योवैभूमातदिति ) छ० अ० ७ योवैभूमा महान्परमात्मा तदमृतं अविनाशीत्यर्थः, ( छ० मि० ) ( यथैधांसीति ) गी० अ० ४ एधांसि काष्ठानि सर्वकर्माणि प्रारब्धादन्यानि ( नीलकण्ठी ) ( ज्ञानेनतुतदज्ञानमिति ) गी० अ० ५ तदात्मन आवरकमज्ञानं येषां ज्ञानेन ब्रह्मास्मीति प्रमाणजेन नाशितं तेषां तज्ज्ञानं कर्तृ आदित्यवदादित्यो यथाकृत्स्नं दृश्यं प्रकाशयति तद्वत्परमार्थवस्तु प्रकाशयति अज्ञानजानर्थनिवृत्त्यर्थं ज्ञानमेष्टव्यमितिभावः, ( नीलकण्ठी० ) ( अज्ञानमिति ) उपदेश सहस्त्रिका स्थोयं श्लोकः, तस्य संसारस्य तद्धानम् अज्ञानहानम् अतः अज्ञाननाशस्येष्टत्वात् ब्रह्मविद्या ब्रह्मविचारशास्त्रम्, ततः

प्रमाणजन्यज्ञानस्य मानसाक्रियारूप भावनाविशेषात्मक भक्ति रूपत्वासम्भवात्, स एवाहमित्यधिमात्रभक्तेः परानभिमतत्वात्, महानारायणोपानिषदि "भक्तियोगेनिरुपद्रवः भक्तियोगान्मुक्तिः भक्तिमतामनायासेनाचिरादेव तत्वज्ञानं भवतीत्युपक्रम्य मध्ये "भक्त्याविना ब्रह्मज्ञानं कदापि नजायते, इत्युक्त्वा "गुर्वनुज्ञया क्रमेण भक्तिनिष्ठोभूत्वा भक्त्यतिशयेन पक्वविज्ञानंप्राप्य तस्मा दनायासेन शिष्यःक्षिप्रमेव साक्षान्नारायणो बभूवेत्युपनिष दित्युपसंहारेण भक्तेर्ज्ञानसाधनत्वावगमात्, "यमेवैषवृणुते

ब्रह्मज्ञानात् निश्रेयसं मोक्ष इत्यर्थः, ( भक्तियोगइति ) भक्तिः प्रेमभक्तिः तद्रू पो यो योगो ज्ञानद्वारामोक्षस्योपायः सनिरुपद्रवः अनेकानर्थरहितः भक्तिविषये ऐश्वरेण तत्पराभवनात्, ननु भक्तिः कस्योपाय इत्यतआह ( भक्तियोगान्मु क्तिरिति ) भक्तिर्मुक्तेरुपाय इत्यर्थः, साच नसाक्षात्तद्धेतुः नहि पंचमी जनक त्वार्था किन्तु प्रयोजकत्वार्था काशीमरणान्मुक्तिरित्यादिवदित्याह ( भक्तिमता मिति ) भक्तिमतां अनायासेन ज्ञानसाकल्यपरिश्रमं विनैव अचिरादेव शीघ्र मेव तत्वज्ञानं आत्मसाक्षात्कारो भवति तस्मान्मुक्तिर्भवतीत्युपक्रमवाक्यार्थः॥ भक्तेर्ज्ञानं प्रत्यन्वयमुक्त्वा व्यतिरेकमाह ( भक्त्याविनेति ) स्पष्टोर्थः, भक्तेः कयाविधाया ज्ञानसाधनत्वं किंसाधनान्तरस्येव गुरोरप्यपेक्षास्ति वा न तथा तद् द्वारा तत्साध्यमुक्तिश्च अपामसोममित्यादिवदापेक्षिकी अथवा ब्रह्मानन्दावाप्ति रूपा तथा तया कस्यापि पूर्वम्मुक्तिर्जातपूर्वा वा नेत्याशङ्कां निराकरोति ( गुर्वनुज्ञेत्यादिना ) शिष्यः मुमुक्षुः गुरोरनुज्ञया आज्ञया क्रमेण स्वधर्मानुष्ठा नपूर्वकेण गुरूपदार्शितेनश्रवणं कीर्त्तनं विष्णोस्मरणं पादसेवनं ॥ अर्चनं वन्दनं दास्यं संख्यमात्मनिवेदनं ॥ इतिपुंसार्पिताविष्णौभक्तिश्चेन्नवलक्षणा ॥ क्रियते भगवत्यद्धा तन्मन्येधीतमुत्तमामिति भागवतोक्तसाधनभक्तिसंपादनक्रमेण भक्तिनि ष्ठःभक्तौसाध्यभक्तौ निष्ठा स्थितिर्यस्य ईदृशोभूत्वा भक्त्यतिशयेन भक्तेरुत्कर्षेण अनायासेन आयासः श्रमस्तदभावोनायासस्तेन पक्वविज्ञानं पक्वं पक्वेष्टकादिव दृढं निश्चयरूपं विज्ञानंविशिष्टमुत्कृष्टं परमपुरुषार्थमोक्षहेतुत्वात् ज्ञानमहंब्र ह्मास्मीति तत्प्राप्य लब्ध्वा क्षिप्रमेव ज्ञानप्राप्त्यव्यवहितोत्तरक्षणएव नतुदेहपातो त्तरं साक्षान्नारायणशब्दलक्ष्यो बभूवसाक्षादित्यनेन सालोक्यसामीप्यसावेशतानि मित्तकमुपचरितं नारायणत्वं प्रतिषिध्यते, इत्युपनिषादिति पूर्वोक्तो मोक्षमार्ग उप निषत् रहस्यभूतः तेन इदंतेनातपस्कायेतिभगवदुक्तरीत्या अधिकारिविशेषायैवोप देशार्होयमितिसूचितं ( स्व० ) ( यमेवैषइति ) कठोपनिषद्द्वितीयवल्लीस्थे

तेन लभ्य इत्यस्याःश्रुतेरुदाहृतबहुश्रुतिविरोधात् वृणुते सम्भजते श्रवणादिकालेपि सोहमित्यभेदेनैवानुसन्धत्ते तेन वरित्रा लभ्यो ज्ञेयोयमात्मा ज्ञातुंशक्य इत्यर्थकल्पनस्यौचित्याच्च॥ ननु कर्मणां विचित्रशक्तिमत्त्वात् "अपाम सोममम्मृता अभूम, "हिरण्यदा अमृतत्वं भजन्ते, कर्मणैवहिसंसिद्धि मास्थिताजनकादय इत्या दिश्रुतिस्मृतिभ्यश्च कर्मणांमोक्षसाधनत्वावगमात्कथं ज्ञानादेव मोक्षो भवतीत्युक्तमितिचेन्न, "नकर्मणा नप्रजया धनेन त्यागे नैके अमृतत्वमानशुः, "अमृतत्वस्यतु नाशास्तिवित्तेनेति,

यम्, मूले एवेयंव्याख्याता, ( अपामसोमामिति ) इदमृक्संहितास्थम्, अ० ८ अध्या० ४ वर्ग० ११ । कृतसोमयागानां तत्फलमनुभवतामुक्तिरियम्, वयं सोमं तदाख्यलतारसं अपाम पीतवन्तः अत्र यथाकथंचित् तद्रसपानस्योत्तरवा क्यनिर्देक्ष्यमाणामृतत्वहेतुत्वाभावात्सामर्थ्यात् "सोमेनयजेतेति विधिविहितसो मयागानुष्ठानपूर्वकं तत्पानं लभ्यते तेनच सोमपानेन अमृता अभूम मुक्तिप्रा प्ता आस्म मुक्तिःकैवल्यनिर्वाण श्रेयो निःश्रेयसामृतमित्यमरः, अपामाभूमेति पापाने भूसत्तायामित्यनयोर्लुङिरूपे इतिशंककाभिप्रेतोऽर्थः, सिद्धान्तेतु आभूत संप्लवं स्थानममृतत्वं हि भाष्यत इति स्मृत्युक्तमापेक्षिकममृतत्वमेवामृतपदेन विं वक्षितं अग्रिमवाक्येप्येवमेवेति वोध्यम् ॥ ( हिरण्यदाअमृतत्वामिति ) इद मृक्संहितास्थम्, हिरण्यं सुवर्णं ददति दातव्यमिति यद्दानं दीयतेनुपकारिणे ॥ दें शेकालेचपात्रेच तद्दानंसात्विकंस्मृतमिति भगवदुक्तप्रकारेण वितरति ते अमृतत्वं मोक्षं भजन्ते इति शंककार्थः, ( स्व० ) ( कर्मणैवहीति ) गी० अ० ३ पूर्वपक्षे संसिद्धिशब्देन मोक्षः । सिद्धान्तेतु अन्तः करणशुद्धिः, ( नकर्मणेति ) इदंबृहन्नारायणस्थम्, यथोक्तब्रह्मतत्वानुस्मरण स्य अन्तरङ्गसर्वत्यागरूपं साधनमत्रोच्यते, अग्निहोत्रादिकं सहस्रसंवत्सरस त्रान्तं यत्कर्म तेन कर्मणा अमृतत्वं नलभ्यते "प्रजयापितृभ्यइतिश्रुतेः, पितृवि षयादृणाद्विमोचनहेतुर्या पुत्रादिरूपा प्रजा तयाप्यमृतत्वं नलभ्यते "दानेसर्वं प्रतिष्ठितं तस्माद्दानंपरमं वदन्तीतिश्रुतेः, धनदानस्य बहुविधफलसाधनत्वा वगमात् दानस्य निष्पादकं यद्धनमस्ति तेन धनेनवाप्यमृतत्वं नलभ्यते, किंतर्हि कर्मप्रजादीनां लौकिकवैदिकव्यापाराणां त्यागेन तदुपलक्षितज्ञानेन केचिदेवान्तर्मुखाः अमृतमानशुः प्राप्नुवन्ति, ( विद्यारण्यदीपिका ) ( अमृतत्वस्येति ) बृ० अ० २ ब्रा० ४ वित्तेन वित्तसाध्येन कर्मणा

"न्यास इति ब्रह्मा ब्रह्माहि परःपरो हि ब्रह्मा तानिवा एतान्यवराणि तपांसि न्यासएवात्यरेचयत्, त्यागएवहिसर्वेषां मोक्षसाधनमुत्तमं ॥ त्यजतैवहितज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदमित्यादिश्रुतिस्मृतिषु कर्मणां मोक्षसाधनत्वनिषेधात् कर्मत्यागोपलक्षितज्ञानस्यैव मोक्षसाधनत्वावगमाच्च, किंच "सर्वेषां कैवल्यमुक्तिर्ज्ञानमार्गेणोक्ता नकर्मसाङ्ख्ययोगोपासनादिभिः, "नान्यःपन्था विद्यतेऽयनायेत्यादि श्रुत्या ज्ञानातिरिक्तानां सर्वेषां साक्षान्मोक्षसाधनत्वनिषेधात्, यत्कृतकं तदनित्यमिति न्यायवत्या "तद्यथेहकर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकःक्षीयते, इत्यादिश्रुत्याकर्मजन्यस्यानित्यत्वप्रतिपादनात्, पूर्वोदाहृत श्रुतीनां

अमृतत्वस्य मोक्षस्य तु अवधारणे आशा नास्त्येव आशापि नकर्त्तव्येत्यर्थः (स्व० ) ( न्यासइतिब्रह्मेति ) वृहन्नारायणाद्विषष्टितमानुवाकस्थमिदम्, पूर्वकाण्डोक्तानां अग्निहोत्रादिकर्मणामारुणिजाबालाद्युपनिषदुक्तप्रकारेण परित्यागो न्यासः सएवोत्तमो मोक्षहेतुरिति ब्रह्मा हिरण्यगर्भो मन्यते, सच ब्रह्मा परोहि परमात्मरूपोहि नतु पूर्वोक्तमतानुसारिण इव जीवः, यद्यप्य सौ हिरण्यगर्भो देहधारी तथापि परोहि परमात्मैव ब्रह्मा हिरण्यगर्भ इतिवक्तुं शक्यते तस्यतच्छिष्यत्वेनतत्समानज्ञानत्वात् अतएव श्वेताश्वतरा आमनन्ति "योब्रह्माणं विदधाति पूर्वंयोवै वेदांश्चप्रहिणोति तस्माइति, यानिपूर्वोक्तानि सत्यतपोदमशमदानधर्मप्रजननाग्न्याधानाग्निहोत्रयज्ञोपासनरूपाणि तपांसि भवन्त्येव तथापि संन्यासमपेक्ष्यावराणि निकृष्टानिसंन्यास एकएव तानि सर्वाण्यत्यरेचयत् अतिक्रान्तवान् उत्तमत्वतारतम्यं तत्रविश्रान्तमित्यर्थः, ( वि० दीपिका ) ( त्यागएवहीति ) स्मृतिरियं, भाल्लवीयश्रुतिर्वा, सर्वेषां मोक्षसाधनानां मध्ये त्यागः संन्यासः सएवोत्तमं मोक्षसाधनमस्ति कुतः हि यस्मात्त्यजतैव संन्यासंकुर्वतैव त्यक्तुः आत्मनः प्रत्यगिन्द्रियागोचरं परमुत्कृष्टं पदं सच्चिदानन्दस्वरूपं ज्ञेयं ज्ञातुं शक्यमित्यर्थः, ( स्व० ) ( सर्वेषामिति ) स्पष्टोर्थः, ( नान्यःपन्थेति ) श्रुतिरियं व्याख्याताप्राक्। ( तद्यथेहेति ) छं० अ ८ ख० १ सदृष्टान्तं पुण्यफलक्षयमाह तत्रदृष्टान्तः यथा इहलोके तासामेव स्वाम्यनुशासनानुवर्त्तिनीनां प्रजानां स्वामिसेवादिकर्मजितो लोको भोगः क्षीयते नश्यति एवं यथा दृष्टान्तमेवामुत्र परलोकेप्यग्निहोत्रादिपुण्यकर्मजितो लोको भोगः क्षीयते इत्यर्थः॥ ( छं० मि० ) कर्मचित इतिपाठे कर्मणा कृष्यादिना चितः सम्पादितः

"आभूतसंप्लवंस्थानममृतत्वं हि भाष्यत इत्यापस्तम्बादिवचनेना पेक्षिकामृतत्वपर्यवसायित्वावगमात्, कर्मणैवहिसंसिद्धिमित्यादि स्मृतीनां सू० विरोधेत्वनपेक्षंस्यादसतिह्यनुमानामिति विरोधाधि करणन्यायेन "नकर्मणा नप्रजयेत्यादिश्रुतिवाधितत्वादुक्तश्रुत्यनु गृहीत स्मृत्यन्तरविरोधाच्च न कर्मणाम्मोक्षसाधनत्वं ॥ किंच न कर्म तमोरूपाज्ञाननिवर्त्तकंभवितुमर्हति अप्रकाशात्मकत्वादज्ञा नाविरोधित्वाच्च नीहारपटलवदित्यनुमानबाधान्नकर्मणामज्ञानानि वर्तकत्वं, तदुक्तं श्रीभगवत्पूज्यपादैः अविरोधितया कर्म नावि द्यांविनिवर्त्तयेत् ॥ विद्याविद्यांनिहन्त्येव तेजस्तिमिरसंघवत् ॥ विद्यैवाज्ञाननाशाय न कर्माप्रतिकूलतः ॥ नाज्ञानस्याप्रहाणेहि रागद्वेषक्षयोभवेदिति, वराहोपनिषदितु "अज्ञानान्धतमोरूपं क र्मधर्मादिलक्षणं स्वयंप्रकाशमात्मानं नैवंमांस्प्रष्टुमर्हति, इत्युक्तम्॥

सस्यादिलोको भोग्य इत्यर्थः ॥ ( आभूतसंप्लवमिति ) आपस्तंववचनम्, आभूतसंप्लवं भूतानां पृथिव्यादीनां यः संप्लवः प्रलयः तत्पर्य्यन्तं स्थानं मरणरा हित्येने स्वर्गेऽवस्थितिरमृत्वमुच्यत इत्यर्थः ॥ ( स्व० ) ( विरोधेत्वनपेक्ष मिति ) पूर्वमीमांसा अ० १ पा० ३ श्रुतिस्मृत्योः परस्पर विरोधे माना न्तरानपेक्षं श्रुतिवाक्यमेव प्रमाणं स्यात् नस्मृतिवाक्यं हि यस्मादसत्येव विरोधे स्मृतिप्रामाण्यहेतुभूत तन्मूलश्रुत्यनुमानं विरोधे तु नेति सूत्रार्थः ॥ ( स्व० )( अविरोधितयेति ) आत्मबोधस्थोयंश्लोकः, ( विद्यैवेति ) उपदे शसाहस्त्रिकास्थोयंश्लोकः६ संसारमूलाज्ञानहानायविद्यैव समर्थेत्यध्याहारः, एव कारार्थमाह ( नकर्मेति ) तत्रहेतुरप्रतिकूलतइति, अविरोधादित्यर्थः; विद्यांवि नाऽज्ञानक्षयाभावश्चेदज्ञानक्षयार्थमेव विद्यान्विष्यतां तत्कार्यस्यतु परमार्थत्वाद्वि द्यया नाशानुपपत्तेस्तन्नाशे हेत्वन्तरमन्वेषणीयमित्यत आह ( नाज्ञानस्येति ) अज्ञा नस्याप्रहाणे रागादिक्षयो नस्यादविवेकपूर्वकत्वस्य रागादावन्वयव्यतिरेकसिद्ध त्वादज्ञानमया रागादयो नपरमार्थाः इत्यज्ञाननिवृत्त्यैव निवर्तन्तइतिनतत्रहेत्वन्त रान्वेषणेत्यर्थः॥ ( अज्ञानान्धेति ) वरा० अ० २ धर्मादिलक्षणंकर्म स्वयंप्रकाशमात्मा नं मांस्प्रष्टुं लेशुंस्वफलमनुभावयितुमितियावत् नार्हति स्वप्रकाशत्वात् कीदृशंकर्म अज्ञानान्धतमोरूपं अन्धयति सदसद्विवेकरहितंकरोति इत्यन्धं गाढं अल्पेतु तम सि विवेकोपि जायते अन्धदृष्ट्युपघाते चुरादिः पचाद्यच् अन्धंचतत्तमोन्धकारं

ननु कर्मणां स्वातन्त्र्येण मोक्षकारणत्वाभावेपि ज्ञानसमुच्चयेन तेषां तत्कारणत्वमस्तु, "विद्यांचाविद्यांच यस्तद्वेदोभयꣳसह अविद्यया मृत्युंतीर्त्वा विद्ययामृतमश्नुते, इतिसमुच्चयविधानादि तिचेन्न, विद्याकर्मणोर्विरोधेन तत्समुच्चयायोगात्, तथाहि विद्याहि नाम नाहंकर्त्ता नाहंभोक्ता किन्तु कूटस्थं ब्रह्मैवाहमस्मीत्येव मात्माकारान्तः करणवृत्तिर्यथावस्तु यथाप्रमाणं च तदधीनतयो त्पद्यमाना न पुरुषाधीनतया, कर्मत्वहंब्राह्मणोऽस्य कर्मणः कर्त्ता ममेदं कर्मसाध्यं फलंतु स्वर्गादिकं भविष्यतीति ब्राह्मण

अन्धन्तमः समासान्तविधेरनित्यत्वादवसमन्धेभ्यस्तमसइत्यच्प्रत्ययाने अज्ञान मेव आत्मरूपावरकत्वादन्धतमः तदेवरूपं स्वरूपं यस्यतत् कार्यकारणयोरभे दोपचारात्कर्मणोऽज्ञानरूपत्वमुक्तम्, अज्ञानरूपत्वादेवाज्ञाननिवर्त्तकत्वाभावा त्कर्मणांनमोक्षसाधनत्वमितिभावः, ( स्व० ) ( विद्यांचाविद्यांचेति ) ईशावा स्यस्थम्, इतःपूर्वस्मिन्मन्त्रे कर्मदेवताज्ञानयोः समुच्चिचीषया पृथगनुष्ठाने नि न्दोक्ता साचैवं केवलकर्मानुष्ठाने पितृलोकप्राप्तावपि तदीयसुखस्य देवलोकापे क्षयापकृष्टत्वात् तत्प्राप्तिर्देवलोकदृष्ट्या गर्हितेव "देवलोकोवै लोकानां श्रेष्ठ स्तस्माद्विद्यांप्रशंसन्तीति बृहदारण्यकश्रुतेः; एवंकेवलदेवताज्ञानानुष्ठाने "विद्य यादेवलोकइतिश्रुतेः पितृलोकापेक्षयोत्कृष्टदेवलोकप्राप्तिरपि तथा तस्याः नित्यनै मित्तिककर्मानाचरणजन्य प्रत्यवायफलभूत नरकभोगसम्पृक्ततया विषसम्पृक्तौदन तुल्यत्वादित्यनेन तयोः समुच्चित्यानुष्ठानं स्तूयते विद्यां देवताज्ञानं उपासनामि तियावत् अविद्यां नित्यनैमित्तिकभेदेनद्विविधं कर्म मृत्युर्यमः, "सत्वमग्निꣳस्वर्ग्यं मध्येषिमृत्यो प्रब्रूहितꣳश्रद्दधानायमह्यम्, इतिकाठकादौ मृत्युशब्दस्य यमेप्रयोग दर्शनात् तत्तरणंच नित्यनैमित्तिककर्मानाचरणजन्यप्रत्यवायफलस्य यमायत्तस्यानु पभोगः तद्धेतुश्च तत्कर्माचरणेन तदनाचरणजन्यप्रत्यवायप्रागभावपरिपालनं तथाच यः कर्मिष्ठो देवताज्ञानं कर्मच तत् पृथगनुष्ठानेऽल्पफलं एतदि तिशेषः उभयंसहानुष्ठेयतया वेद जानाति ज्ञानस्यानुष्ठानार्थत्वात्सहानुतिष्ठती त्यर्थः, सःनित्यनैमित्तिककर्मणा मृत्युं यमं तीर्त्वा तद्यातनामनुपभुज्य विद्यया देवताज्ञानेनामृतं भावप्रधाननिर्देशादमृतत्वं देवरूपत्वं देवलोकप्राप्त्याश्नुते प्राप्नोतीतिसिद्धान्तार्थः ॥ पूर्वपक्षेतु विद्या आत्मज्ञानं मृत्युशब्देन तदुपल क्षितःसंसारः तत्तरणं तद्विरहित्वं अमृतत्वं मोक्ष इति विशेषः, ( स्व० )

त्वकर्तृत्वाद्यभिमानपूर्वकप्रवृत्तिविशेषात्मकं पुरुषेण कर्तुमकर्तुमन्यथावाकर्तुंशक्यं कर्त्रधीनतयोत्पद्यमानमिति तयोर्विरोधः स्फुटएव प्रतीयते तस्मात्कथं तयोस्समुच्चयो भवितुमर्हति, नहि विरुद्धयोस्तेजस्तिमिरयोस्समुच्चयो दृष्टः, प्रत्युत यथा प्रकाशावलंबिनी बुद्धिरप्रकाशावलंबिनीं बुद्धिंविनाशयति तथाऽकर्त्रात्मबुद्धिः कर्त्रात्मबुद्धिं विनाशयेत्, "विद्यांचाविद्यांचेति समुच्चयविधानन्तु देवतोपासनाज्ञानकर्मसमुच्चयविषयम्, अन्यथा तत्र "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये,इति "अग्ने नय सुपथेतिच मार्गयाचनाद्यनुपपत्तिः स्यात् ॥

( हिरण्मयेनेति ) ईशावास्यस्थोयम्, विद्यांचेतिमन्त्रे विद्यया केनमार्गेणामृतत्वमश्नुते इत्याशङ्कांपरिहरन् "तद्यत्तत्सत्यं असौ स आदित्यो यएष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेक्षन्पुरुष इतिश्रुते स्तदुभयं सत्यब्रह्मतयोपासीनेन यथोक्तकर्मकृतान्तकाले प्राप्तेसति कर्तव्यं सत्यात्मनः प्रातिद्वारप्रार्थनमभिधत्ते सत्यस्य तन्नाम्नोपासितस्यादित्यमण्डलस्थस्य सगुणब्रह्मणो मुखंद्वारं हिरण्मयेन हिरण्यस्यविकारोहिरण्मयं दाण्डिनायनेतिसूत्रेणनिपातितोयम्, तत्सदृशेन तेजोमयेनेतियावत् पात्रेण घटस्य शरावादिवदाच्छादकेन मण्डलेन पिहितमाच्छादितं वर्तते ततःकिमतआह हेपूषन् धर्मादिदानेन जगत्पुष्णातीतिपूषा सविता तत्सम्बुद्धिः हेपुषन् त्वंतन्मुखं अपावृणु अपावृतंकुरु दर्शनप्रतिबन्धकमपनयेत्यर्थः, किमर्थं सत्यधर्माय सत्यं सत्याख्यब्रह्मोपासनं धर्मो यस्य सः सत्यधर्माहं तस्मै मदर्थमित्यर्थः, अत्रसमासान्तविधेरनित्यत्वात् धर्मादनिजिति समासान्ताभावः, ननु द्वारापावरणेन कस्तवोपकारोतआह दृष्टये मम सत्याख्यब्रह्मसाक्षात्कारायेत्यर्थः, यद्वा सत्यधर्मायेति चतुर्थीषष्ठयर्थे तेन सत्या अबाधिता धर्माःसत्यसङ्कल्पत्वादयो यस्य तादृशस्योक्तब्रह्मणो दर्शनायेत्यर्थः, (स्व॰)( अग्नेनयेति ) हिरण्मयेनेत्यनेनैकदेशस्थोयम् पूर्वप्रकृतकर्मोपासनोभयकर्त्रा अन्ते कर्त्तव्यमग्नेस्सकाशान्मार्गप्रार्थनमभिधत्ते "अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम, इतिसम्पूर्णमन्त्रस्वरूपं, हेदेव द्योतनस्वभाव अग्नेत्वं यतः अस्माकमितिशेषः विश्वानि सर्वाणि वयुनानि ज्ञानानि तदुपलक्षितानि कर्माणिच विद्वानसि जानासि अतोऽस्मान्समुच्चयानुष्ठातॄन् त्वदुपासकान् सुपथा शोभनेनोत्तरमार्गेण पुनरावृत्तिरहितेन नय

किंचपैङ्गलोपनिषदि “ज्ञानामृततृप्तयोगिनो नकिंचित्कर्त्तव्यमास्ति तदस्तिचेन्न स तत्त्वविद्भवतीति ज्ञानिनःकर्त्तव्यत्वनिषेधात्, तथैवा न्यत्रापि ज्ञानामृतेनतृप्तस्य कृतकृत्यस्ययोगिनः नचास्तिकिंचित्क र्त्तव्यमस्तिचेन्नसतत्त्वविदिति ज्ञानिनः कर्त्तव्यत्वनिषेधात्, कर्मणा वध्यतेजन्तुर्विद्ययाचविमुच्यते तस्मात्कर्मनकुर्वंति यतयःपारद र्शिन इत्यादिस्मृत्या कर्मणोवन्धकत्वावगमाच्च नज्ञानकर्मणो स्समुच्चयः, यदपि “यदेवविद्ययाकरोति श्रद्धयोपनिषदा तदेव वी र्यवत्तरं भवतीति विद्यायाः कर्मसहकारित्वं श्रुतं, तदपि मन्त्रप्रति पाद्यदेवताज्ञानपूर्वक कर्मानुष्ठाने फलाधिक्यप्राप्तिबोधनपरंबोध्य म्, ननु कर्मणां यदि बन्धकत्वं तर्हि “अहरहस्सन्ध्यामुपासीत,

गमय प्रापय किमर्थं रायेधनाय कर्मफलभोगायेतियावत् किंच अस्मत् अस्मत्तः जुहुराणं कुटिलं देवयानप्रतिवन्धकमेनः पापं युयोधि वियोजय अपनय वयन्तु देहावसानकालेऽन्यत्कर्त्तुमशक्ता अत इदानीं तेतुभ्यं भूयिष्ठां वहुतमां नमउक्तिं नमस्कारवचनं विधेमविदधमः कुर्मः नमस्कारमात्रेण परिचरामेतिभावः, अत्रयुयोधी ति युमिश्रणामिश्रणयोरित्यस्य लोटिछान्दसम्, विधेमेति तु व्यत्ययेन धात्रोव र्त्तमाने लिङि॰ जुहुराणमिति हुर्छांकौटिल्ये इत्यस्य शानचि॰ ( स्व॰ ) ( ज्ञा नामृतेति ) स्पष्टोर्थः, ( कर्मणेति ) व्याससमृतिः, स्पष्टोर्थः ॥( यदेवविद्ययेति ) कर्मिष्ठः विद्यया इदं कर्मैवं कर्त्तव्यं इमान्यस्य साधनानि ईदृशोत्राधिकृतः क र्माङ्गमन्त्राणामयमर्थः, तद्द्रव्यक्रियादेरिमादेवता इत्यादिज्ञानेन श्रद्धया इदं कर्मावश्यमेतत्फलं दास्यतीति विश्वासेन उपनिषदा उपनिषदि एकान्ते सुपां सुलुगिति डेराच् वेदेरहस्युपनिषदित्यमरः, “यदेव कर्मकरोति तदेव वीर्य्यवत्तरं वीर्यंस्वफलजननसामर्थ्यं अतिशयेन तद्भवति नतुविद्यादिकं विनाकृतं, अत्र तर पा उक्तधर्मवैकल्येप्यल्पं फलं अस्त्येवेति ध्वन्यते, ( स्व॰ )( अहरहःसन्ध्या मिति ) अत्र अहरहरिति द्वितीयान्तस्य अहन् शब्दस्य वीप्सया नित्यवीप्सयो रितिद्वित्वं द्वितीयातु कालाध्वनोरत्यन्तसंयोगे इतिसूत्रेण, तदर्थश्च व्यापकता सा च यद्यपि सन्ध्योपासने न सम्भवति तस्य दैनिकयावदवयवावृत्तित्वात् तथापि सिंहसादृश्येन वाले सिंहत्वस्येव तत्र दिनस्यादिमध्यान्तवृत्तितया व्यापकसादृ श्येन व्यापकत्वस्यारोपेण द्वितीयोपपत्तिः अन्यथाधिकरणसप्तमीस्यात् छांदसव्य त्ययेनतु नतदुपपत्तिः सत्यांगतौ तत्कल्पनाया अन्याय्यत्वात् तस्य आदिमध्या

"कुर्वन्नेवेहकर्माणि जिजीविषेच्छतꣳसमाःएवन्त्वयि नान्यथेतो स्तिनकर्मलिप्यतेनरे, "यावज्जीवमग्निहोत्रं जुहोति, सन्ध्यात्रयन्तु कर्त्तव्यं द्विजेनात्मविदासदा॥स्वाध्यायेनित्ययुक्तःस्याद्दैवेचैवेहकर्मणि॥ अकुर्वन्विहितंकर्म निन्दितंचसमाचरन्॥ प्रसज्जंश्चेन्द्रियार्थेषुनरःपतनमृच्छतीत्यादि श्रुतिस्मृतिविहितानामकरणे प्रत्यवायजनकानमप्यकर्त्तव्यत्वं प्राप्तमितिचेन्न,साभिमानफलाभिसन्धियुक्तेन क्रियमाणानांकर्मणांबन्धकत्वेपि निरभिमानफलाभिसन्धिरहितेन क्रियमाणानां तेषांप्रत्यवायपरिहारद्वारान्तःकरणशुद्धिहेतुत्वेनावश्यकर्त्तव्यत्वात्, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति

न्तदनित्वंतु प्रत्यहं कालत्रये कर्त्तव्यत्वात् तत्रमूलंतु अत्रत्या व्यापकत्त्वार्थकहिती याश्रुतिः, सन्ध्यात्रयंतु कर्त्तव्यं द्विजेनात्मविदा सदेत्यादिस्मृतयश्चेति ॥ ( स्व० ) ( कुर्वन्नेवेति ) ईशावास्यस्थेयम्, अमुमुक्षोर्धनाभिलाषिणः कर्मण्यधिकार इत्याह इह अस्मिन्कर्माधिकारे लोके कर्माणि अग्निहोत्रादीनि कुर्वन्नेव शतं शतसंख्याकाः समाः संवत्सरान् जिजीविषेज्जीवितुमिच्छेत् कर्मणां करणेकारणमाह ( एवमिति ) कर्मशब्देन विहितकर्मानाचरणहेतुको दुःखनरकभोगसमकालः किमहंपापमकरवं किमहंसाधुनाकरवमित्यादिरूपः पश्चात्तापो लक्ष्यते तथाच एवं संवत्सरशतंकर्मानुष्ठातरि नरेनरत्वाभिमानिनि कर्माधिकारिणि त्वयि कर्म तल्लक्षित उक्तरूपःपश्चात्तापःनलिप्यते नसंबध्यते काम्येन स्वर्गस्य नित्यनैमित्तिकाभ्यां नरकनिवृत्तेश्च सिद्धत्वात्, ननु यथा ज्ञानिनस्तदलेपस्तथा ममापि सम्भविष्यतीति किन्तेन कर्मणा इत्यत आह ( नान्यथेति ) इतः कर्मानुष्ठानरूपप्रकारादन्यथा अन्येन प्रकारेण कर्माधिकारिणस्तव तदलेपो नास्ति इत्यर्थः,अत्र तदलेप इत्यध्याहारलब्धम् ॥ ( स्व० )( यावज्जीवमग्निहोत्रमिति ) इदं बव्हृचब्राह्मणस्थं, अत्रकस्तजीवनं निमित्तीकृत्याग्निहोत्रप्रयोगो विधीयते तत्र जीवनस्य निमित्तत्वात् सतिनिमित्ते नैमित्तिकस्य त्यागायोगान्नित्यत्वमर्थसिद्धम्, नच जीवननैरंतर्य्येण प्रयोगनैरंतर्यापत्तिः, सायंप्रातः कालयोर्विहितत्वात्, स्पष्टं चैतत्पूर्वमीमांसायां द्वितीयाध्यायस्य चतुर्थपादे षष्ठस्य द्वितीयेच ॥ ( सन्ध्यात्रयंत्विति ) वृद्धयाज्ञवल्क्यस्थम् ( स्व० )( स्वाध्यायेति ) मनुः अ० ४ स्वाध्याये वेदाध्ययने दैवे अग्निहोत्रादौ, ( तमेतमिति ) बृ० । अ० ।४।ब्रा० ४ ब्राह्मणा द्विजाः पूर्वमन्त्रोक्तविशेषणं एतं औपनिषदं पुरुषं वेदानुवचनादि

यज्ञेन दानेन तपसानाशकेन, प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ॥ कृतार्थान्यस्तमायान्ति प्रावृडन्तेघनाइव ॥ तद्यथेहेतियानिन्दा साफलेनहिकर्मणि ॥ फलेच्छान्तुपरित्यज्य कृतंकर्मविशुद्धिकृत् ॥ कषायेकर्मभिःपक्वे ततोज्ञानंप्रवर्त्तते, इत्यादिश्रुतिस्मृतिभ्यः ॥ तथाच न कर्मणां स्वातन्त्र्येण ज्ञानसमुच्चयेनवा मोक्षहेतुत्वं, किंत्वन्तःकरणशुद्धिहेतुत्वात्तेषां तद्द्वारा ज्ञानजनकत्वं ज्ञानस्यच मोक्षजनकत्वमितिसिद्धम् ॥ तत्त्वज्ञानं वेदान्तविचाराद्भवति, "आत्मावा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिश्रुत्या दर्शनस्य कृतिसाध्यत्वायोगादात्मदर्शनमुद्दिश्य श्रोतव्यः वेदान्तविचारःकर्त्तव्य इत्यात्मज्ञानसाधनत्वेन विचारविधानात् ॥ नन्वस्य श्रवणविधेः कोविषयः किंफलं कस्सम्बन्धःकोवाधिकारीति विशेषतोनुबन्धचतुष्टयस्यप्रेक्षावत्प्रवृत्यङ्गभूतस्यानिरूपणात्कथंतत्रतेषांप्रवृत्तिर्भवेदितिचेन्न,श्रुत्यैवतस्यस्प

भिःविविदिषन्तिवेदितुमिच्छन्तिवेदानुवचनादिभिरात्मज्ञानेछोत्पद्यते इतिभावः, वेदानुवचनंच वेदस्यमन्त्रब्राह्मणात्मकस्यअनुवचनं पश्चाद्गुरुकर्तृकोच्चारणानन्तरं पठनं नित्यवेदाभ्यासलक्षणं तस्यअन्तःकरणशुद्धिद्वाराज्ञानेछाहेतुत्वंयज्ञोद्रव्ययज्ञोज्ञानयज्ञश्चतपसोविशेषणम् ( अनाशकेनेति ) कामानशनलक्षणेनेत्यर्थः॥(स्व०) ( प्रत्यक्प्रवणतामिति ) कर्माणि नित्यनैमित्तिकानि फलाभिसंधिंविना क्रियमाणानिच बुद्धेः शुद्धितः शोधनेन पापापनोदनेन प्रत्यक्प्रवणतां आत्माभिमुखतामुत्पाद्य अस्तं विनाशं यान्ति चित्तशुद्ध्युत्पादनेन तेषांकृतार्थत्वात्, नाशेदृष्टान्तःप्रावृडिति प्रावृषः वर्षर्त्तोः अन्ते अवसाने घनाइव मेघाइव वर्षत्वन्ते मेघा यथा विनश्यन्ति तद्वदित्यर्थः, (स्व०) ( तद्यथेहेति ) "तद्यथेहकर्मजित इति श्रुतौ या कर्मणां निन्दा विवेकिनं प्रति तेषांक्षयिफलकत्वोक्तिरूपनिन्दा सूचिताऽकर्त्तव्यता सा फले फलेच्छापूर्वकृतकर्मविषया नतु कर्मणि नतुकर्मसामान्यविषया,ननु किंतर्हकर्त्तव्यं कर्म किंचतत्फलमित्यतआह(फलेच्छान्त्विति) ( स्व० ) स्मृत्यन्तरमाह ( कषायइति ) कर्मभिः नित्यनैमित्तिकैः फलानिछयाकृतैरन्यैश्च कषाये अन्तःकरणमले रागादौ पक्के दग्धेसति ततः प्रतिवन्धक निरासाद्धेतोः मोक्षकारणं ज्ञानं प्रवर्त्तते इत्यर्थः, ( स्व० )(आत्मावाअरेइति ) बृ० अ० २ ब्रा० ४ मैत्रेयीनाम्नींस्वभार्यांप्रतियाज्ञवल्क्योक्तिरियम्, वैशब्दोनिश्चये

## ष्टतयानिरूपितत्वात्, तथाहिप्रत्यगभिन्नंब्रह्मतद्विषयः, ''तत्त्वमसि,

(मन्तव्यइति) युक्तिभिरनुचिन्तनीयः; निदिध्यासितव्यः विजातीयवृत्त्यनन्तरित सजातीयवृत्तिप्रवाहविषयीकर्त्तव्यः, निध्यातुमिच्छति निदिध्यासति, निदिध्यासित व्यः सन्नन्ताद्ध्यैचिन्तायामितिधातोस्तव्यप्रत्ययः मूलेस्पष्टमन्यत्, (ख०)( तत्त्वमसी ति ) छ० अ० ६ख० ८ महावाक्यसंज्ञिकेयंश्रुतिः, महावाक्यंच ब्रह्मात्मैक्यबोधकं वेदवाक्यम्, अवान्तरवाक्यंतु जीवब्रह्मान्यतरस्वरूपबोधकं वेदवाक्यं, अस्याः श्रुतेः श्वेतकेतो इत्यग्रिमं पदमस्ति उद्दालकः श्वेतकेतुनामकाय पुत्रायात्मतत्व मपदिदेश हेश्वेतकेतोत्वंतदसीति अत्रतत्पदस्याज्ञानादिसमष्टिरेतदुपहितं सर्वज्ञ त्वादिविशिष्टचैतन्यं ईश्वररूपमेतदनुपहितंतदुभयाधारभूतं शुद्धचैतन्यंचैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं वाच्योर्थः, अज्ञानादिसमष्टेस्तदुपहितचैतन्यरू पेश्वरस्यचाधारभूतमनुपहितं शुद्धचैतन्यंतु लक्ष्योर्थः, त्वंपदस्यतु अज्ञानव्यष्टिरेत दुपहितमल्पज्ञत्वादिविशिष्टचैतन्यं जीवरूपमेतदनुपहितंतदुभयाधारभूतंशुद्धचैत न्यंचैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं वाच्योर्थः, अज्ञानादिव्यष्टेस्तदुपहित चैतन्यरूपजीवस्यचाधारभूतमनुपहितं शुद्धचैतन्यन्तु लक्ष्योऽर्थः, इदंमहावाक्यं सम्बन्धत्रयेणाखण्डार्थबोधकं अखंडार्थत्वंच संसर्गानवगाहियथार्थज्ञानजनकत्वं तत्प्रातिपदिकार्थत्वंवा, संबन्धत्रयंच वेदान्तसारेस्पष्टंविवेचितामिति तदेवलिख्यते सम्बन्धत्रयंनाम पदयोस्सामानाधिकरण्यं, पदार्थयोर्विशेषणविशेष्यभावः; पदार्थ प्रत्यगात्मनां लक्ष्यलक्षणभावश्चेति, तदुक्तं ॥ * ॥ सामानाधिकरण्यंचविशेषण विशेष्यता लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनामिति, सामानाधिकरण्यस म्बन्धस्तावत् यथा सोयंदेवदत्त इतिवाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्द स्यैतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्यचैकस्मिन्पिण्डेतात्पर्यसम्बन्धः, तथा "तत्त्वमसीतिवाक्येपि परोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिवि शिष्टचैतन्यवाचकत्वंपदस्यचैकस्मिन् चैतन्ये तात्पर्यसम्बन्धः, विशेषणविशेष्य भावसम्बंधस्तु यथा तत्रैव वाक्ये सशब्दार्थतत्कालविशिष्टदेवदत्तस्यायंशब्दार्थै तत्कालविशिष्टदेवदत्तस्यचान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः, तथा त्रापिवाक्ये तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वंपदार्थाऽपरोक्षत्वादिविशि ष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः, लक्ष्यलक्षणस म्बन्धस्तु यथा तत्र सशब्दायंशब्दयोस्तदर्थयोर्वा विरुद्धतत्कालैतत्कालविशिष्ट त्वपरित्यागेनाविरुद्धदेवदत्तपिण्डेनसह लक्ष्यलक्षणभावः, तथात्रापिवाक्ये

---

* भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थेतात्पर्यं सामानाधिकरण्यम

तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वांशपरित्यागेनाविरुद्ध चैतन्येनसह लक्ष्यलक्षणभावः, इयमेव भागलक्षणेत्युच्यते, अस्मिन्वाक्ये नीलोत्पलवाक्यवद्वाक्यार्थो नसङ्गच्छते, तत्रतु नीलपदार्थनीलगुणस्य उत्पलपदार्थोत्पलद्रव्यस्य शौक्ल्यपटादिव्यावर्त्तकतया अन्योन्यविशेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्यवा तदैक्यस्य वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणान्तरविरोधाभावाद्वाक्यार्थः सङ्गच्छते, अत्रतु तदर्थपरोक्षत्वादि विशिष्टचैतन्यस्य त्वमर्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्यच तदैक्यस्यवावाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणान्तरविरोधाद्वाक्यार्थो नसंगच्छते, अत्रतु गङ्गायांघोषः प्रतिवसतीतिवाक्यवज्जहल्लक्षणा न सङ्गच्छते, अत्रगङ्गाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद्वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्तत्वाज्जहल्लक्षणा संगच्छते, अत्रतु परोक्षत्वापरोक्षत्वविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद्भागान्तरमपिपरित्यज्यान्यलक्षणाया अयुक्तत्वाज्जहल्लक्षणा न संगच्छते, नच गंगापदं स्वार्थपरित्यागेन यथातीरपदार्थं लक्षयति तथा तत्पदं त्वंपदं वा स्वार्थपरित्यागेन तत्पदार्थं त्वंपदार्थंवा लक्षयतु अतःकुतो जहल्लक्षणा न संगच्छतइतिवाच्यम्, तत्र तीरपदाश्रवणे तदर्थाप्रतीतौ लक्षणया तत्प्रतीत्यपेक्षायामपि तत्त्वंपदयोः श्रूयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनरन्यतरपदेनान्यतरपदार्थप्रतीत्यपेक्षाया अभावात्, अत्रशोणोधावतीतिवाक्यवदजहल्लक्षणापि न सम्भवति, शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात् तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसम्भवादजहल्लक्षणा सम्भवति, अत्रतु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षण वाक्यार्थस्य विरुद्धत्वात्तत्परित्यागेनतत्सम्बन्धिनो यस्य कस्यचिदर्थस्य लक्षितत्वेपि तद्विरोधापरिहारादजहल्लक्षणापिनसम्भवत्येव, नच तत्पदं त्वंपदंवा स्वार्थविरुद्धांशपरि त्यागेनांशांतरसहितं तत्पदार्थं त्वंपदार्थंवा लक्षयतु अतः कथं प्रकारांतरेण भागलक्षणांगीकरणमितिवाच्यम्, एकेन पदेन स्वार्थांशपरित्यागपदार्थांतरोभयलक्षणाया असम्भावात्, पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनस्तत्प्रतीत्यपेक्षाभावाच्च; तस्माद्यथा सोयं देवदत्त इतिवाक्यं तदर्थोवा तत्कालैतत्कालविशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्धं तत्कालैतत्कालविशिष्टांशं परित्यज्याविरुद्धदेवदत्तांशमात्रं लक्षयति तथा तत्त्वमसीतिवाक्यं तदर्थोवा परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्धं परोक्षत्वापरोक्षत्वविशिष्टांशं परित्यज्य

"प्रज्ञानंब्रह्म, "अयमात्माब्रह्म, "अहम्ब्रह्मास्मि, "सयश्चायं पुरुषे यश्चासावादित्ये सएकः, "सत्यमात्माब्रह्मैव ब्रह्मात्मैवात्रह्येव न विचिकित्स्यम्, "योसावसौपुरुषस्सोहमस्मि,

अविरुद्धं चैतन्यमात्रं लक्षयतीति ( प्रज्ञानंब्रह्मेति ) इदंमहावाक्यमैतरेयोपनिषत्स्थम्, "सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्तीति वाक्येन देहेन्द्रियादिसाक्षिरूपं यत्प्रज्ञानं त्वंपदार्थरूपं निर्णीतं "तदेवैषब्रह्मेत्यादिवाक्येन जगत्कारणतया निर्णीतं परंब्रह्म नानयोरीषदपि भेदोस्ति, अहंप्रत्ययगम्यत्वाकारेण यदा विवक्ष्यते तदाजीव इत्युच्यते यदातुशास्त्रप्रतिपाद्यत्वाकारो विवक्षितस्तदानीं ब्रह्मेत्यभिधीयते, अतोव्यवहारभेदमात्रं नतुतत्वतोभेदोस्ति, नचैवंसति पुनरुक्तिप्रसङ्गः,अब्रह्मत्वपरोक्षत्वयोर्व्यावर्त्ययोर्भेदेन पदद्वयोपयोगात्, एतच्चवाक्यवृतौ विस्पष्टमभिहितं प्रत्यग्बोधोयआभाति सोद्वयानन्दलक्षणः॥अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः॥ इत्थमन्योन्यतादात्म्य प्रतिपत्तिर्यदाभवेत्॥ अब्रह्मत्वंत्वमर्थस्य व्यावर्त्तेत तदैवहि ॥ तदर्थस्यचपारोक्ष्यं यद्येवंकिततःशृणु ॥ पूर्णानन्दैकरूपेण प्रत्यग्बोधोवतिष्ठतइति ॥ ( विद्या०दीपिका )( अयमात्माब्रह्मेति ) माण्डूक्यस्थमिदंमहावाक्यम्,अयमनुभूयमान आत्मा अस्मत्प्रत्ययालंवनभूतश्चेतनस्त्वंपदार्थः ब्रह्म सच्चिदानन्दस्वरूपतत्पदार्थब्रह्माभिन्न इत्यर्थः॥ ( अहंब्रह्मेति ) वृ० अ० १ ब्रा० ४ इदमनुभववाक्यम्, आचार्येण तत्त्वंपदार्थौपरिशोध्य तत्त्वमसीत्यखण्डार्थेबोधिते अधिकारिणो जायमानाया अहंशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दाद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिताया साक्षात्काररूपायाश्चित्तवृत्तेरभिनयपरम्, ( सयश्चेति ) आनन्दवल्लीस्थमिदंमहावाक्यम्, स आत्मार्थमन्यत्प्रियं भवतीत्यात्मा प्रियतम इतियुक्तिप्रसिद्धः, अयं सर्वदाहंभूयासं कदाचिदपि ममासत्वं माभूदित्यनुभवसिद्धो यः पुरुषे बुभुत्सुमनुष्ये आनन्दोस्ति यश्चानन्दः असौ परोक्षः आदित्ये अस्ति ससर्वोपि स्वरूपेणैकएव नतुभिद्यते मानुषानन्दो देवानन्द इतिभेदप्रत्ययस्त्वौपाधिकः यथैकस्याकाशस्य घटाकाशो मठाकाशइति, ( वि० दीपिकानुसारी ) ( सत्यमात्मेति ) नृ० उ० ख० ९ प्रजापतिःशपथपूर्वकं जीवेशयोरभेदं दृढयति ( सत्यमित्यादिना ) आत्माब्रह्मैव ब्रह्मात्मैवेसेतत्सत्यं हि यस्मादुक्तमेकत्वं सत्यं अतोत्र संशयो नैव कार्य इत्यर्थः॥ ( स्व० ) ( योसाविति ) ईशोपनिषत्स्थमिदम्॥ यः प्रसिद्धः असौ आदित्यमण्डलस्थः परोक्षः असौ शास्त्रदृष्ट्याप्रत्यक्षः, यद्वा असावक्षिस्थः पुरुषः परिपूर्णः सोहम

"नान्यदतोस्ति द्रष्टा नान्यदतोस्तिश्रोतेत्यादिश्रुतेः, अनर्थ निवृत्तिरानन्दावाप्तिरूपो मोक्षः प्रजोजम्, "कर्तृत्वादिदुःख निवृत्तिद्वारा नित्यानन्दावाप्तिर्मोक्षः प्रयोजनं भवति, "तरति शोकमात्मवित्, "ब्रह्मविद्ब्रह्मैवभवति, "तदेवंविद्वाꣳस इहैवामृ ताभवंति, "अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमु खात्प्रमुच्यते, "यत् ज्ञात्वा मुच्यते जन्तुरमृतत्वंच गच्छति, "ज्ञात्वा तं मृत्युमत्येति नान्यःपन्था विमुक्तये, "तद्ब्रह्माहमिति ज्ञात्वा ब्रह्मसंपद्यतेध्रुवम्, "तत्रकोमोहः कः शोक एकत्व

स्मीत्यर्थः, ( स्व० ) ( नान्यदतोस्तीति ) बृ० अ० ३ ब्रा० ७ अतो स्मात्परमात्मनस्सकाशादन्यो द्रष्टानास्त्येव एवमग्रेपिबोध्यः, ( स्व० ) ( कर्तृ त्वादीति ) मुक्तिकोपनिषद्द्वितीयाध्यायस्थमिदम्,स्पष्टोर्थः, ( तरतिशोकमिति ) व्याख्यातं, ( ब्रह्मविदिति ) स्पष्टोर्थः, ( तदेवमिति ) एवं पूर्वोक्तप्रकारेण तद्ब्रह्म अहमस्मीति विद्वांसो जानन्तः इहैव इहलोके ब्रह्मलोकादिगमनं विने वामृता मुक्ताभवन्तीत्यर्थः, (स्व०) ( अनाद्यनन्तमिति ) कठोपनिषत्स्थमिदम्, तं अशब्दमित्यादिपूर्ववाक्यनिर्दिष्टं अनादि अकार्यं अनन्तं नित्यं महतःपरंमह तत्वाद्बुद्ध्याख्यात्परं ब्रह्म ध्रुवं कूटस्थं निचाय्य अवगम्य मृत्युमुखात् मृत्युगोचरा दविद्याकामकर्मलक्षणात्प्रमुच्यते वियुज्यत इत्यर्थः ॥ ( स्व० ) ( यद्ज्ञात्वेति ) कठोपनिषत्स्थमिदम्, जन्तुःप्राणिवर्गः यत् आत्माभिन्नंब्रह्म ज्ञात्वा आचार्य्यतः शास्त्रतश्च मुच्यते अविद्यादिहृदयग्रन्थिभिःजीवन्नेव वियुज्यते अमृतत्वंच मोक्षंच ब्रह्मानन्दरूपंगच्छति प्राप्नोतीत्यर्थः,(स्व०)( ज्ञात्वातमिति ) कैवल्योपनिषत्स्थम्, तं पूर्वोक्त मात्मानं ज्ञात्वा अहंब्रह्मास्मिति साक्षात्कृत्य मृत्युं ससंस्काराभविद्यां अत्येति अतीत्यगच्छति नान्यः पन्था उक्ताद्ब्रह्मज्ञानादतिरिक्तो मार्गो विमुक्त ये मुक्त्यर्थं नास्तीत्यर्थः, ( स्व० ) ( तद्ब्रह्माहमिति ) अमृतबिंदुस्थम्, अस्या एव ब्रह्मबिंदु इत्यपि नामान्तरम्, तत् निष्कलमित्यादिपूर्ववाक्यनिर्दिष्टं ब्रह्मा हमिति ज्ञात्वा साक्षात्कृत्य ब्रह्मसम्पद्यते ब्रह्मैवभवति ध्रुवं निश्चितमित्यर्थः, ( स्व० ) ( तत्रकोमोहइति ) ईशावस्यस्थमिदम्, विदुषःयस्मिन्काले सर्वाणि भूतान्यात्मैवाभूत् तत्र तस्मिन्काले एकत्वं ऐकात्म्यं अनुस्यूतं पश्यतः अनुभवतस्त स्य मोहः आवरणरूपः कः किंनिमित्तकः शोकश्च विक्षेपरूपः कः किंनिमित्त कः आत्मज्ञानेन अविद्याया निरस्तत्वात् स्वरूपंजानतस्समूलाविद्योच्छेदादावर

मनुपश्यतः, "अभयंवैजनक प्राप्तोसि, "ब्रह्मैवसन्ब्रह्माप्येति, "यथानद्यः स्यन्दमानास्समुद्रे अस्तंगछन्ति नामरूपेविहाय तथाविद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं, " तद्यो योदेवानां प्रत्यबुध्यत सएवतदभवत्तथा ऋषीणां तथा मनुष्याणां, "नतस्यप्राणा उत्क्रामन्त्यत्रैव समवनीयन्त इत्यादिश्रुतेः ॥ सम्बन्धस्तु प्रतिपाद्यप्रतिपादकभाव प्राप्यप्रापकभाव कर्त्तृकर्त्तव्य भावादिरर्थादवगन्तव्यः ॥ अधिकारीतावदिहजन्मनि जन्मान्तरेवा नित्यनैमित्तिकप्रायश्चित्तादिनिष्कामकर्म्मानुष्ठानान्नितान्त निर्मलस्वान्तः साधनचतुष्टयसम्पन्नः पुरुषविशेषः, "विहितकर्माचरन्साधनचतुष्टयसम्पन्नः,"चित्तशुद्धिमेत्याशासूयेर्ष्याहंकार

णविक्षेपयोरभावेन कामाद्यनुदयाज्जीवन्मुक्तिस्थित्या तूष्णीं भूत आस्ते इत्यर्थः ( स्व० ) ( अभयमिति ) बृ० अ० ४ ब्रा० २ हे जनक त्वमभयं जन्ममरणादि निमित्तभयशून्यं ब्रह्म वै निश्चयेन प्राप्तोसीति याज्ञवल्क्य उवाचेत्यर्थः ॥ ( मि० ) ( ब्रह्मैवसन्निति ) बृ० अ० ४ ब्रा० ४ उक्तरूपब्रह्मैव सन् ब्रह्माप्येति प्राप्नोति देहाद्यावरण विच्छेदापेक्षयाऽप्येतीत्युपचर्य्यते नित्यप्राप्तत्वादेवेत्यर्थः, ( मि० ) ( यथानद्यइति ) मुण्डकस्थम्, यथा नद्यो गङ्गाद्याः स्यन्दमाना गच्छन्त्यः समुद्रे समुद्रं प्राप्यास्तं अदर्शनमविशेषात्मभावं गछन्ति प्राप्नुवन्ति नामचरूपंचनामरूपे विहाय हित्वा तथाऽविद्याकृतनामरूपाद्विमुक्तस्सन् विद्वान्परादक्षरात्पूर्वोक्तात्परं दिव्यंपुरुषं यथोक्तलक्षणमुपैत्युपगच्छतीत्यर्थः, ( शं० भा० )( तद्योयोदेवानामिति ) बृ० अ० १ ब्रा० ४ देवादीनांमध्ये योयस्तद्ब्रह्म प्रत्यक्षेण साक्षादकरोत्सएव ब्रह्मात्मनाऽतिष्ठदित्यर्थः; ॥ ( नतस्यप्राणाइति ) नृसिंहोत्तरतापिनी० ख० ५ तस्य ज्ञानिनः प्राणा वागादयस्तदुपलक्षितं लिङ्गशरीरमितियावत् अन्तकाले नोत्क्रामन्ति धूमार्चिमार्गेण लोकान्तरं नगच्छन्ति तद्धेतोरविद्याकार्यकर्मणो विनष्टत्वत् किन्तर्हि अत्रैव आत्मन्येव कारणे समवनीयन्ते एकीभावंगच्छन्तीत्यर्थः ॥ ( विहितेति ) मण्डलब्राह्मणोपनिषत्स्थमिदं वेदान्तविचाराधिकारिप्रतिपादकम्, स्पष्टोर्थः ॥ ( चित्तशुद्धिमिति ) ( प्राकृतंसर्वमितिच ) इमेनारदपरिव्राजकोपनिषत्स्थे पूर्वोक्तश्रुत्यासमानविषयके, चित्तशुद्धिः रागादिदोषक्षयः, आशा अप्राप्तप्राप्ती

दग्ध्वा साधनचतुष्टयसम्पन्नः, "प्राकृतं सर्वमिदं हेयं मत्वा साधनचतुष्टयसम्पन्नः, "मुमुक्षवःपुरुषास्साधनचतुष्टयसम्पन्नाः श्रद्धावन्तं सत्कुलभवं श्रोत्रियमित्यादिमण्डलब्राह्मण नारदपरिव्राजक मुक्तिकोपनिषद्वाक्यैः साधनचतुष्टयसम्पन्नस्यैवात्राधिकारित्वावगमात् ॥ सन्ध्यावन्दनाग्निहोत्रादीनि नित्यानि ॥ जातेष्ट्यादीनिनैमित्तिकानि ॥ कृच्छ्रचान्द्रायणादीनि प्रायश्चित्तानीति नित्यादीनां विवेको बोध्यः, एतेषां नित्यादीनां चित्तशुद्धिहेतुत्वे प्रमाणन्तु पूर्वोदाहृतश्रुतिस्मृतयः, एषामवान्तरफलंतु "कर्मणापितृलोको विद्ययादेवलोक इतिश्रवणात्पितृलोकादिप्राप्तिरिति ॥ उक्तंचेदं सुरेश्वराचार्य्यैः नित्येषु शुद्धिप्राधान्या द्भोगोप्यप्रतिबन्धकः॥ भोगम्भङ्गुरमीक्षंते बुद्धिशुद्धिस्तुरोचतइति ॥ साधनचतुष्टयंतु विवेको वैराग्यं शमादिषट्कसम्पत्तिर्मुमुक्षुत्वंचेतिप्रसिद्धं, उक्तंच वराहोपनिषदि "नित्यानित्यविवेकश्च इहामुत्रविरागता शमादिषट्कसम्पत्तिर्मुमुक्षातान्समभ्यसेदिति, तत्रब्रह्मैवपारमा

च्छा,असूया परोत्कर्षासहिष्णुत्वं,ईर्ष्या परोत्कर्षोमाभूत्स्वस्यैवोत्कर्षोभवेदित्याकारिकान्तःकरणवृत्तिः, अहङ्कारो वृत्तस्वाध्यायादिभिरात्मनःपूज्यत्वाभिमानः, अन्यदतिरोहितम् ॥ ( मुमुक्षवइति ) मुक्तिकोपनिषत्स्थमिदम्,श्रद्धावन्तमित्यादिकं गुरुविशेषणं ॥ ( कर्मणेति ) बृ० अ० १ ब्रा० ५ ॥ कर्मणा अग्निहोत्रादिना केवलेन पितृलोको जेतव्यो न पुत्रेण नापिविद्यया विद्ययापरया देवलोकोजेतव्यो नपुत्रेण नापिकर्मणेत्यनुकृष्यते इत्यर्थः, ( मि० ) ( नित्येष्विति ) बृ० सम्बन्धवार्त्तिकस्थोयं श्लोकः, श्लो० ११३१, नित्यकर्मणां प्रत्यवायनिवृत्तिद्वारा चित्तशुद्धिः भोगश्चफलं तत्र कर्म्मफलभोगेन शुद्धेःप्रतिबंधात्कथंतेषां चित्तशुद्धिद्वारा ज्ञानहेतुत्वमित्याशङ्कावारणार्थः, नित्येषु पितृलोकादिभोगो भवन्नपि शुद्धेर्नप्रतिबंधकः तस्यास्तेषु प्राधान्यात् साहि प्रधानं सती भोगमनुगुणीकरोति ननुविषयभोगे क्रियमाणे तदासक्त्याशुद्धिर्नश्येदतआह ( भोगमिति ) नित्यकर्मकर्त्तारस्तज्जन्यचित्तशुद्धिबलाद्भोगं नश्वरं पश्यन्ति तंविनश्वरत्वेन विचार्य्य ततोवैतृष्ण्यात्तदासक्ता नभवंतीत्यर्थः, बुद्धिशुद्धिबलाद्भोगस्यनश्वरत्वदर्शन कथनेनफलितमाह बुद्धिशुद्धिस्तुरोचते दीप्यते प्रतिबन्धकाभावात्स्वफलमुत्पादयितुं क्षमते इत्यर्थः ( नित्यानित्येति ) वराहोपनिषत्स्थम्, स्पष्टोर्थः ॥

र्थिकंनित्यमन्यदपारमार्थिकमनित्यमिति नित्यानित्यवस्तुविवेचनं विवेकः, "अविनाशीवाअरेयमात्मा, "योवैभूमातदमृतं, "अतोन्य दार्त्तं, "यदल्पंतन्मत्यमित्यादिश्रुतेः, ऐहिकस्त्रक्चन्दनवनितादिभो गेषु स्वर्गादिब्रह्मलोकान्तेष्वमृताप्सरआदिविषयभोगेषुच वांताश नवद्विरागो वैराग्यं, "परीक्ष्यलोकान्कर्मचितान्ब्राह्मणो निर्वेदमा यान्नास्त्यकृतः कृतेन, "प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्त मवरं येषु कर्म एतच्छ्रेयो येभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति,"तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्रपुण्यचितोलो कः क्षीयते, "शोषणंमहार्णवानां शिखरिणांप्रपतनं ध्रुवस्यप्रच लनं व्रश्चनंवातरज्जूनां निमज्जनंपृथिव्याः स्थानादपसरणंसुरा णामित्येतद्विधेऽस्मिन्संसारे किं कामोपभोगैरित्यादिश्रुतेः॥ शम

( अविनाशीति ) व्याख्यातम् ॥ ( योवैभूमेति ) (अतान्यदिति )( यदल्पमिति च ) व्याख्यातम् ॥ ( परीक्ष्यलोकानिति ) मुण्डकस्थमिदम्, कर्मचितान् कर्म णा क्रियया सम्पादितान् लोक्यन्ते दृश्यन्त इतिलोकाः भोग्यास्तान्परीक्ष्य प्र त्यक्षादिनाऽनित्यत्वेन निश्चित्य निर्वेदं वैराग्यमायात् गच्छेत् कुतः अकृतोमोक्षः कृतेनकर्मणा नास्तितीत्यर्थः॥ ( प्लवाह्येतेइति ) मुण्डकस्थमिदं,एतेपूर्वप्रक्रान्ता य ज्ञरूपाः प्लवानावः अदृढाः विनश्वरफलाः हिशब्दःप्रसिद्धौ केतेयज्ञरूपाः प्लवाः येषु अष्टादशोक्तं अष्टादशपुरुषाः निर्वाहकत्वेनोक्तायत्रतत् अवरं क्षयिफलक त्वात्ज्ञानापेक्षयाऽधमं कर्मवर्त्तते राहोश्शिरः शिलापुत्रकस्यशरीरमित्यादिवदौपा धिक आधाराधेयभावः, अथवा यज्ञशब्दः तत्साध्यापूर्वपरः तत्रकर्मणः स्थिति जनकतयावोध्या येमूढा एतदेतत्कर्मैव श्रेयः श्रेयःकारणमभिनन्दन्ति मन्यन्ते तेपुनः जरासहितं मृत्युं जरापूर्वकं मरणमेवापियन्ति प्राप्नुवन्ति नतु मुक्तिं तस्या ज्ञानैकसाध्यत्वादितिभावः, अष्टादशपुरुषाश्च अध्वर्युः । १ । प्रतिप्रस्थाता। २ । नेष्टा । ३ । उन्नेता । ४ । ॥ १ ॥ ब्रह्मा। १ । ब्राह्मणाछंसी । २ । अग्नीत् । ३ । पोता । ४ । ॥ २ ॥ उद्गाता । १ । प्रस्तोता। २ । प्रतिहर्त्ता । ३ । सुब्रह्मण्यः। ४ । ॥ ३ ॥ होता। १ । मैत्रावरुणः । २ । अच्छावाकः। ३ । ग्रावस्तुत् । ४ । ॥४॥ ॥ ३ ॥ तीन होता । १ । मैत्रावरुण । २ । अच्छावकः । ३ । ग्रावस्तुत् । ४ पत्नी । १ । यजमानश्चेति, अत्र प्रथमं चतुष्कमध्वर्युगणसंज्ञम्; द्वितीयं ब्रह्म गणसंज्ञम्, तृतीयमुद्गातृगणसंज्ञं, चतुर्थहोतृगणसंज्ञमिति वोध्यम् ॥ ( तद्यथे हेति ) व्याख्याताप्राक् ॥(शोषणमिति) मैत्रायणीयोपनिषत्स्थमिदम्, शोषणंमहा र्णवानां प्रलयकाले, शिखरिणां महामेरुप्रभृतीनां गिरिणां प्रपतनमुच्छेदः, ध्रुव

दमो परति तितिक्षा समाधान श्रद्धाख्याः शमादयः॥ तत्र मनसः श्रवणादिव्यतिरिक्तविषयेभ्यो निग्रहः शमः, तद्व्यतिरिक्ताविषयेभ्य एव चक्षुरादिबाह्येन्द्रियाणां निग्रहो दमः, तेभ्यो निगृहीतानां तेषां पुनस्तदननुषङ्ग उपरतिः, यद्वा विधिनास्वीकृतस्य कर्मणो विधिना परित्यागात्मकः सन्न्यास उपरतिः, "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति, "ब्रह्मचर्य्यंसमाप्य गृहीभवेद्गृहीभूत्वा वनीभवेद्वनीभूत्वा प्रव्रजेत् यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वनाद्वाऽथ पुनरव्रतीवा व्रतीवा स्नातकोवाऽस्नातकोवा

स्य सर्वज्योतिश्चक्रावलम्बनस्य प्रचलनं स्वमण्डलात्प्रच्यवनं, वातरज्जूनां वातमयानांरज्जूनां शिशुमारचक्रबन्धनानां व्रश्चनंछेदनं, पृथिव्या अपि सप्तद्वीपवत्या निमज्जनमुदकान्तर्लयः, एवंस्थाननाशे तत्स्थानां सुराणां ब्रह्मादीनां तस्मात्स्थानादपसरणं अपसर्पणं स्थानभ्रष्टतयाक्षीणभोगत्वं, इतीत्थमेतद्विधे एतादृक्प्रकारे सर्वथानश्वरेऽस्मिन्ब्रह्मादिस्तम्बपर्यन्ते संसारे किं कामोपभोगैः कार्यं आघातस्थानंनीयमानस्य वध्यस्येव भोजनाच्छादनालंकारादि नतोषमुपनेष्यतीत्याभिप्रायः ( रामतीर्थकृतदीपिका ) ( एतमेवेति ) बृ॰ अ॰ ४ ब्रा॰ ४ एतमेवात्मलोकमिच्छन्तः प्रार्थयन्तो विविदिषन्तः प्रव्राजिनः प्रव्रजनशीलाः मुमुक्षवः प्रव्रजन्ति प्रकर्षेण सर्वाणिकर्माणि न्यस्यन्तीति संन्यासोंविधीयते,आग्नेयोष्टाकपालो भवतीतिवत्, इति, ( मि॰ ) ( ब्रह्मचर्यमिति ) जाबालोपनिषत्स्थम्, ब्रह्मचर्यंसमाप्येति अन्यथाऽनधीतवेदस्यकर्मण्यनधिकारात्,गृहीभूत्वेति अन्यथा संतत्यभावे पितृऋणानपाकरणात्,वनीभूत्वेति तपसाहन्तिकिल्बिषमिति सकिल्बिषस्यानधिकारात्; अतएवस्मृतिः ऋणत्रयमपाकृत्य मनोमोक्षे निवेशयेदिति, तथा अधीतवेदोजपकृत्पुत्रवानन्नदोऽग्निमान् ॥ शक्त्याचयज्ञकृन्मोक्षे मनःकुर्यात्तुनान्यथेति च, न्यायागतधनस्तत्त्व ज्ञाननिष्ठोतिथिप्रियः ॥ श्राद्धकृत्सत्यवादीच गृहस्थोपि विमुच्यत इतिस्मृतेराश्रमान्तरस्यपि ज्ञानसाधनत्वात् ज्ञानिनोपि याज्ञवल्क्याद्येः क्रमसंन्यासो नविरुद्ध इतिभावः, ननु तृतीयखण्डे ब्रह्मचारिभिरात्मज्ञानोपायः पृष्टः ब्रह्मचारिणांच विवाहादिकर्मण्यग्राणां कथमात्मज्ञानावसर इत्याशङ्क्य वैराग्यपाटवे क्रमातिक्रमेण संन्याससंभवात्तज्ज्ञानप्रश्नोपपत्तिरित्याशयेनाह ( यदिवेति ) यदिवेत्यनियमे इतरथा गार्हस्थ्याद्यनङ्गीकृत्य व्युत्क्रमप्रकारेणापि परमविरक्तस्य कर्माणि प्रवृत्त्यनुपपत्तेरर्थात्संन्याससिद्धिरितिभावः, गृहाद्वनाद्वेति वाशब्दःप्रत्येकमभिसंबध्यते वनात्तृतीयाश्रमात्, एतज्जन्मावच्छिन्नमेव व्रतादिन संन्यासाङ्गमित्याह( अथपुनरिति ) अव्रति अचीर्णाध्ययनांगव्रतः स्नातकः

उत्सन्नाग्निरनग्निकोवा यदहरेव विरजेत्तदहरेव प्रव्रजेत्, "वमना हारवद्यस्य भातिसर्वैषणादिषु तस्याधिकारस्संन्यासेत्यक्तदेहाभि मानिनः, "यदामनसिवैराग्यंजातंसर्वेषुवस्तुषु तदैवसंन्यसेद्विद्वा नन्यथापतितोभवेत्, "यदामनसि संजातं वैतृष्ण्यं सर्ववस्तुषु तदासंन्यासमिच्छन्ति पतितः स्याद्विपर्यये, "संसारमेव निस्सा रन्दृष्ट्वा सारदिदृक्षया प्रव्रजन्त्यकृतोद्वाहाः परंवैराग्यमाश्रिता इ त्यादिश्रुतेः ॥ शीतोष्णादिद्वन्द्वसहनं तितिक्षा, चित्तैकाग्र्यं समा धानं, गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा, "तस्मादेवंविच्छान्तो दान्त उपरत स्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्यति, "समाहितः श्रद्धावित्तो भूत्वेतिमाध्यन्दिनीयपाठः, "शान्तो दा न्तो विरक्तस्सुशुद्धो गुरुभक्तस्तपोनिष्ठः शिष्यः, "श्रद्धयाविद्य यात्मानमन्विष्य, "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ तस्यै

कृतविद्योव्रतान्तस्नातः उत्सन्नाग्निर्मृतदारः अनग्निकोऽगृहीताग्निकः यदहरेवेत्येव कारोऽविलम्बार्थः, हेतुहेतुमतोर्लिङितिलिङ् (ना॰दीपिका)(वमनाहारेति )(यदा मनसीतिच) तैलङ्गाक्षरमुद्रितमैत्रेयोपनिषत्स्थम्, मनोवैतृष्ण्यमितिकर्तृवाचिपदम ध्याहार्य्यं, वमनशब्दः बाहुलकात्कर्मणिल्युटावान्तपरः सप्तम्यन्तद्वतिः सर्वैष णादिषु सर्वा याएषणा इच्छास्तासां आदयःआश्रयाःविषयतासम्बन्धेन आधा राः काम्या पदार्थास्तेष्वित्यर्थः, कृष्णआदिःपृथासूनो भीष्मादिश्वसुयोधन इ तिदृष्टान्ते नाधिगर्थेदयेशामितिसूत्रे कैय्यटे आदिशब्दस्य आश्रयार्थकत्वोक्तेस्त स्यतत्त्वं समूलं, शेषंस्पष्टम् ॥(स्व॰)(यदामनसिसंजातमिति )( संसारमेवेतिच ) नारदपरिव्राजकोपनिषत्स्थम्, विपर्य्यये तृष्णानिवृत्तिंविनैव संन्यासाश्रमस्वीका रे शेषमनावृतम् ॥ ( तस्मादेवंविदिति ) वृ॰ अ॰ ४ ब्रा॰ ४ यस्माद्ब्रह्मविदो नेतिनेत्याद्युक्तलक्षणः स्वरूपभूतो महिमा तस्मादेवंवित् कर्मादिसम्बधशून्य इ त्यापाततो जानन्प्रथमं दान्त उपरतःबाह्येन्द्रियव्यापारोऽनन्तरं शान्तोऽन्तःकरण तृष्णातो निवृत्तः तत उपरतः सर्वैषणाविनिर्मुक्तो विधिनात्यक्तसर्वकर्म्मा संन्या सी तितिक्षुर्ज्जीवनाविच्छेदिशीतोष्णादिद्वंद्वसहिष्णुः समाहितः सम्यगात्मन्याहि तचित्तो भूत्वात्मन्येव स्वेकार्य्यकरणसंघात एवात्मानं प्रत्यक्चेतयितारं पश्यति साक्षात्करोतीत्यर्थः ( मि॰ )( शान्तोदान्तइति ) सुशुद्धः आचारशुद्धिमान् स्पष्टमन्यत् ॥( श्रद्धयेति ) प्रश्नोपनिषत्स्थमिदम्, विद्यया उपासनया स्पष्टम् ( यस्यदेवइति ) श्वेताश्वतरस्थम्, यस्यपुरुषस्य देवेपरमेश्वरे परोत्कृष्टा निरुपा

ते कथिताह्यर्थाः प्रकाशन्ते महात्मनः, इत्यादिश्रुतेः ॥ मुमुक्षुत्वंच मोक्षेच्छावत्वं, तच्च "नसपुनरावर्त्तत इतिश्रुत्या मोक्षस्य नित्यत्वावगमात्सिद्धम्, सुखंमेभूयाद्दुःखंमेमाभूदिति सर्वानुभवसिद्धम्, "सत्कर्मपरिपाकतो बहूनां जन्मनामन्ते नृणां मोक्षेच्छा जायते, इति पैङ्गलोपनिषद्वचनसिद्धंच ॥ एवंचैतादृशविशेषणाविशिष्टः प्रमाता श्रौतोधिकारीतिसिद्धः, नेतरः, "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः नाशान्तमानसोवापि प्रज्ञानेनैनमाप्नुयादित्यादिश्रुत्या साधनचतुष्टयरहितस्यात्मज्ञानद्वारा तत्प्राप्तिनिषेधात्, तस्मात्प्रेक्षावतां विचाराङ्गभूतानुबन्धचतुष्टयस्यागमिकत्वादात्मज्ञानाय वेदान्तविचारः कर्त्तव्य इतिसिद्धम् ॥ ननु नायं विचारः कर्त्तव्यः ।विषयप्रयोजनाभावात् काकदन्तपरीक्षावत्, नच श्रुत्यैवेदानीं तद्विषयप्रयोजनवत्वं प्रदर्शितमितिवाच्यम्, तयोःप्रत्यक्षादिप्रमाणान्तरविरोधेनासम्भवात्, तथाहि नाहंब्रह्मेति भेदप्रत्यक्षविरोधात्, जीवेशौ भिन्नौ विरुद्धधर्म्माक्रान्तत्वाद्दहनतुहिनवदित्यनुमानविरोधात्, "द्वासुपर्णा सयुजा सखाया समानं वृक्षं

धिका भक्तिर्यथा तथानिरुपाधिका भक्तिरेव गुरावपि विद्यते गुरुदेवतयोरकत्व वुध्या तस्य देवतागुरुविषयनिरुपाधिकभक्तिमतो योग्याधिकारिण एते कथिता अस्यामुपनिषदि भगवता श्वेताश्वतरेण कथिता उपदिष्टा हि यस्मादर्थाः प्रकाशन्ते यथावत्प्रकाशंते महात्मनो महानुभावस्य नान्यस्येति यस्मात्तस्माद्विद्यार्थिभिः देवतागुरुविषया निरुपाधिका भक्तिः कर्त्तव्येत्यभिप्रायः ॥ ( विज्ञान० ) ( नसपुनरिति ) निरालंबोपनिषत्स्थमेँ, स मुक्तः पुनर्न आवर्त्तते नजन्मानुभवतीत्यर्थः ॥ ( सत्कर्मेति ) स्पष्टोर्थः ॥ ( नाविरतइति ) कठोपनिषत्स्थम्, दुश्चरितं कायनिर्वर्त्यं पापं तस्मादनुपरतोऽनिवृत्तः प्रज्ञानेन मोक्षहेतुत्वात्प्रकृष्टेन ब्रह्मज्ञानेन एनं प्रकृतमात्मानं नाप्नुयादिति संवन्धः, एवमग्रेपि नापि अशान्तः इन्द्रियलौल्यादनुपरतः नाप्यसमाहितः अनेकाग्रचित्तःविषयेभ्यः नाप्यशांतमानसः विषयेभ्य इन्द्रियसमाधाने श्रूयमाणपुण्यलोकप्राप्तिफलादप्यनिवृत्तचित्तः एतेनोक्तविपरीतः प्रज्ञानेनैनमात्मनमाप्नोतीतिफलितम्; ( द्वासुपर्णाविति ) श्वेताश्वतरस्थोमन्त्रः, द्वौ सुपर्णा सुपर्णौ पक्षितुल्यौ चेतनत्वाज्जीवपरमात्मानौ सयुजा सदासंयुक्तौ सखाया सखायौ परस्परमित्रे सयुजावपि गुरुभार्गवौ नसखायौ

परिषस्व जाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाक शीति ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरएवच ॥ क्षरस्सर्वाणि भूतानि कूटस्थोक्षर उच्यते, इत्यादि श्रुतिस्मृतिविरोधाच्च विष यासम्भवः ॥ "तत्त्वमस्यादिवाक्यानां जीवस्येश्वरसाम्यप्रतिपा दनपरत्वोपपत्तेश्च ॥ तथाऽज्ञानं नाशाप्रतियोगि अनादिभावत्वा द्ब्रह्मवदित्यनुमानेनाज्ञानस्य नित्यत्वावगमादज्ञाननिवृत्तिरूपप्र योजनासम्भवः ॥ किंच कृतश्रवणस्यापि दुःखनिवृत्त्यदर्शनात्त दसम्भव इतिचेन्न, प्रत्यक्षादिविरोधानामाभासत्वेन विषयप्रयो जनसम्भवात्, तथाहि अयं विचारः कर्तव्यः विषयप्रयोजनव त्वाद्भोजनादिवत्, नच प्रत्यक्षविरोधः, नाहंब्रह्मेति जीवनिष्ठब्रह्म भेदस्य सन्निकर्षासम्भवेनाऽप्रत्यक्षत्वात्, ननु भेदस्यान्योऽन्या भावरूपत्वादभावप्रत्यक्षे च विशेषणतासन्निकर्षस्य नियतत्वेन कथं भेदस्याप्रत्यक्षत्वमितिचेदत्र भवान्प्रष्टव्यः किमभावप्रत्यक्षे केवलविशेषणतासन्निकर्षस्य कारणत्वमुत अभावाश्रयाधिकरणे न्द्रियसंयुक्तविशेषणतासन्निकर्षस्य नाद्यः कुड्यादिव्यवहितभू तलादिनिष्ठपटाद्यभावेपि विशेषणतामात्रस्य विद्यमानत्वेन तस्या पि प्रत्यक्षत्वापत्तेः, नद्वितीयः त्वन्मते कर्णशष्कुल्यवच्छिन्ननभ सएव श्रोत्रेन्द्रियत्वात्तस्यैव स्वग्राह्यशब्दाभावाधिकरणत्वात्स्वे न स्वस्य संयोगाद्यसंभवाच्छब्दाभावप्रत्यक्षेऽधिकरणेन्द्रियसन्नि कर्षाभावेन शब्दाभावस्याप्रत्यक्षत्वापत्तेः ॥ किंच संयोगस्य सा वयवत्वनियतस्यात्मन्यसंभवात्तत्र भेदप्रत्यक्षगन्धस्याप्यनवका शः, ननु नाहंब्रह्मेति भेदप्रत्यक्षस्यास्माभिरनुभूयमानत्वात्कथं

राहुरव्योःपरं वैरं गुरुभार्गवयोरपीति स्मरणात् सखायावपि शिवकेशवौ नसयुजा वित्युभयोपादानम्, समानमेकं वृक्षं ओव्रश्चुछेदने छेदनधर्माणं शरीरं परिषस्वजा ते ष्वंजपरिष्वङ्गे छन्दासिलिडिति भूतसामान्येलिट् सदिस्वंज्योः परस्यलिटीति परस्यषत्वनिषेधः, अन्योजीवः पिप्पलं शरीरवृक्षोत्थं फलं कर्माख्यं स्वादु सरसंयथा भवत्येवमत्ति भुंक्ते अनश्नन्नभुंजान एवान्यो अभिचाकशीति परमात्मा भृशं प्रकाशतएव नत्वत्ति काशृदीप्तौ यङ्लुकिलट् ॥ ( नारायणी दीपिका ) ( द्वाविमाविति ) गीता अ० १५ श्लोकः १६,

तदभाव इतिचेन्न, तस्यभ्रमत्वोपपत्तेः, ननु नासौभ्रमः बाधकाभा वादितिचेन्न, देहात्मज्ञानस्य देहातिरिक्तात्मज्ञानबाधकत्ववद्बाधक त्वोपपत्तेः, अन्यथा स्थूलोहं कृशोहं काणोहमित्यादिप्रत्यक्षेणा त्मनि स्थूलत्वादिकमपि स्यात्, नचेष्टापत्तिः अस्थूलत्वादिश्रु तिविरोधात्, देहेन्द्रियादिसाक्षिणस्तस्य स्थूलत्वाद्यदर्शनेन तद नुपपत्तेश्च, ॥ अस्तुवा भेदस्य प्रत्यक्षत्वं तथापि देहाहंकारादिवि शिष्टविषयकभेदप्रत्यक्षस्य "तत्वमस्यादिश्रुतिबोधितशुद्धचैत न्यविषयकैक्यज्ञानस्य च भिन्नविषयत्वान्नतद्विरोधः ॥ किंचपूर्वत न्त्रस्य षष्ठाध्यायगतेन सू० पौर्वापर्ये पूर्वदौर्बल्यंप्रकृतिवदित्य पच्छेदाधिकरणन्यायेन पूर्वोत्पन्नज्ञानस्योत्तरोत्पन्नज्ञानेन बाध्यमा नत्वान्नतद्विरोधः,तथाहि ज्योतिष्टोमे बहिष्पवमानस्तोत्रार्थं हवि र्द्धानदेशाद्बहिष्पवमानदेशंप्रति निर्गच्छतामृत्विग्यजमानादीना "अध्वर्युंप्रस्तोता सन्तनुयात्प्रस्तोतारमुद्गातोद्गातारंप्रतिहर्त्ता प्रति हर्त्तारंब्रह्माब्रह्माणं यजमानोयजमानं प्रशास्तेत्यादिनान्वारम्भणं विहितं, तद्विच्छेदनिमित्तं प्रायश्चित्तंचश्रूयते, "यद्युद्गातापच्छि द्येतादक्षिणं तं यज्ञमिष्ट्वातेनपुनर्यजेत तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्य न्स्यात् यदि प्रतिहर्त्तापच्छिद्येत सर्ववेदसंदद्यादिति, तत्रोद्गातृप्र तिहर्त्रोःक्रमेणविच्छेदे विरुद्धप्रायश्चित्तयोस्समुच्चयासम्भवात् किं पूर्वकार्यमुत परमिति संदेहे अनुपसंजातविरोधितया पूर्वमिति प्रा प्ते राद्धान्तः पौर्वापर्ये निमित्तयोः क्रमेण प्राप्तेसति पूर्वस्य नैमि त्तिकस्य दौर्बल्यं उत्तरस्य पूर्वनिरपेक्षस्य तद्बाधकतयोदितत्वा त् पूर्वोदयकाले उत्तरस्याप्राप्तत्वेन पूर्वेण तस्य बाध्यत्वायोगात्,

( पौर्वापर्येइति ) पंचमपादस्थंसूत्रम्, सूत्रार्थस्त्वनुपदमेव मूलेव्यक्तो भविष्यति, अध्वर्युमित्यादिश्रुतेरयमर्थःप्रातः सवने बहिष्पवमानेन स्तोष्यमाणा सयजमाना अध्वर्युप्रभृतय ऋत्विजः शालाया बहिःप्रसर्पन्ति तदानीमेकस्य पृष्ठतोन्यइत्येवं पिपीलिकावत्पङ्क्त्याकारेण गन्तव्यम्,तत्रपुरतोगन्तुःकच्छेगृहीत्वैव पृष्ठतोन्योग च्छेत्,एवंसति यदिप्रमादादुद्गातागृहीतङ्कच्छंमुंचेत् तदादक्षिणामदत्वा प्रक्रान्तो यज्ञः समापनीयः तंसमाप्य पुनरपि सयज्ञः प्रयोक्तव्यः तस्मिन्प्रयोगे पूर्वं याद्दिदि त्सितं द्रव्यन्तद्द्यात् यदाप्रतिहर्तामुंचेत् तदातस्मिन्नेव प्रयोगे सर्वस्वं दद्यादिति

तदुक्तं पूर्वं परमजातत्वादबाधित्वैव जायते ॥ परस्यानन्यथोत्पादान्नत्वबाधेन सम्भव इति, तत्र दृष्टान्तः प्रकृतिवदिति, यथा प्रकृतौकृतो पकाराः कुशाः प्रथममतिदेशेन विकृतावुपकाराकांक्षिण्यांप्राप्ताः कल्प्योपकारचरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वत्, तथाच यथा प्रथमप्रवृत्तं दुर्बलं पूर्वनैमित्तिकमेव पश्चात्प्रवृत्तेन प्रबलेनोत्तरेण नैमित्तिकेन बाध्यं, यथावा प्रथमप्रवृत्तं शुक्त्यज्ञानजन्यं रजतप्रत्यक्षमुत्तरोत्पन्नेन शुक्तितत्वसाक्षात्कारेण बाध्यम्, तथा प्रथमोत्पन्नं दुर्बलं जीवेशभेदप्रत्यक्षमेवोत्तरोत्पन्नेन प्रबलेनापौरुषेयवाक्यजनितेन ब्रह्मात्मसाक्षात्कारेण बाध्यमिति न प्रत्यक्षविरोधः ॥ नच पदार्थबोधे शब्दस्य मानान्तरसापेक्षत्वादुपजीव्यविरोध इतिवाच्यम्, पदार्थबोधे तदपेक्षत्वेपि वाक्यार्थबोधे तदपेक्षाभावात्, पदार्थबोधेपि व्यवहारमात्रस्यैवापेक्षितत्वात्पूर्वोत्पन्नज्ञानस्य व्यवहाराङ्गत्वांशस्यैवोत्तरोत्पन्नेन निरस्तसमस्तव्यवहारेण तत्वावेदकप्रमाणेनौपनिषदात्मज्ञानेन बाधनाच्च ॥ यत्तु जीवेशौ भिन्नौ विरुद्धधर्माक्रान्तत्वादिति, तदसङ्गतं हेत्वसिद्धेः, ननु जीवेल्पज्ञत्वदुःखित्वादिधर्माणामनुभूयमानत्वात् ब्रह्मणि सर्वज्ञत्वादिधर्माणां "यस्सर्वज्ञस्सर्वविदित्यादिश्रुतिसिद्धत्वाच्च कथं हेत्वसिद्धिरितिचेत्तत्रभवान्प्रष्टव्यः किमेतेऽल्पज्ञत्वादयो धर्म्मास्सवितुःकिरणवज्जीवस्य स्वाभाविका उत स्फटिकस्यलौहित्यवदौपाधिकाः, नाद्यःसुषुप्तौ तेषामदर्शनेन स्वाभाविकत्वासम्भवात्, नहि स्वाभाविकधर्मस्य सवितृकिरणादेः कदाचित्सवित्रादावुपलभ्यमानत्वं कदाचिदनुपलभ्यमानत्वमिति शक्यं कल्पयितुं, स्वाभाविकत्वाभावप्रसङ्गात्, नच सुषुप्त्यवस्थायां मनसः पुरीतन्नाडीप्रविष्टत्वेन ज्ञानकारणस्यात्ममनस्संयोगस्याभावात्सुखदुःखादीनामात्मनि विद्यमानत्वेप्यनुपलब्धिरितिवाच्यम्, आत्मनो विभुत्वात्पुरीतन्नाड्यन्तर्गतेन मनसा

( पदार्थबोधइति ) आगमजन्यबोधे वर्णादिप्रत्यक्षत्वस्य प्रयोजकत्वेपि तत्सत्यत्वांशस्याप्रयोजकत्वेनानुपजीव्योयःसत्यत्वांशः तस्यबाधान्नोपजीव्यविरोध इत्यर्थः,

संयोगसम्भवेन तदानीं सुखाद्युपलब्धौ बाधकाभावात्, नच पुरीतन्नाड्या ज्ञानप्रतिबन्धकत्वमिति वाच्यम्, प्रमाणाभावात्, सुषुम्णातिरिक्तपुरीतन्नाड्याः शशशृङ्गायमाणत्वात्तत्र प्रविष्टेस ति मनसियोगिनांज्योतिर्मण्डलादिज्ञानस्य विद्यमानत्वेन तस्याः ज्ञानप्रतिबन्धकत्वाभावात् अस्तुवापुरीतन्नाड्याः सुषुम्णातिरिक्त त्वं भाष्यादिषु हृदयपरिवेष्टनत्वेनव्यवहारात् तथापि तस्या ज्ञा नप्रतिबन्धकत्वकल्पना दुर्वचा ज्ञानकारणत्वेनत्वदभिमतस्यात्म मनःसंयोगस्य तत्कारणतायाएव दुर्वचत्वात्, तथाहि निरवय वयोस्तयोस्संयोगासम्भवेन तत्संयोगस्य वाचिकस्य ज्ञानकार णत्वमयुक्तम्, अन्यथाऽव्याप्यवृत्तिसंयोगाश्रयत्वेन तयोरेकदे शावच्छेदेन संयोग एकदेशावच्छेदेन तदभाव इति विभागाश्र यत्वंस्यात्, नचेष्टापत्तिः, तथासति सावयवत्वेनानित्यत्वप्रसंगात्, नचात्ममनसोः कल्पिताः प्रदेशास्सन्तीति वाच्यम्, कल्पितस्य मिथ्यात्वेन तज्जन्यसंयोगस्यापि मिथ्यात्वात्तज्जन्यज्ञानस्यापि मि थ्यात्वं स्यादितिदिक्॥ किंचाल्पज्ञत्वकर्तृत्वभोक्तृत्वदुःखित्वादीनां स्वाभाविकत्वे तेषां नाशाय तत्त्वविचारादौ प्रवृत्तिर्नस्यात् स्वा भाविकस्य नाशासम्भवात्, नहि स्वभावनाशाय बुद्धिमता यत्नः क्रियते कृतेवा नाशो भवति स्वस्यैव नाशापत्तेः, सवितृकिरणवत्, नच पाकरक्ते घटे स्वाभाविकस्य श्यामरूपस्य विनाशदर्शनात् स्वाभाविकस्यापि कर्तृत्वभोक्तृत्वदुःखित्वादेरीश्वरोपासनया ना शोपपत्तिरितिवाच्यम्, तत्रापि अग्निसम्पर्कादिना जायमानस्य रक्तरूपस्य वस्त्रादावारोपितरूपान्तरवदौपाधिकत्वेन स्वाभा विकत्वाऽसम्भवात्, श्यामरूपस्य चिरकालजलादिसम्पर्कादिना पुनः प्रादुर्भावदर्शनाच्च पाकोद्भवरक्तरूपेण स्वाभाविकश्यामरूप तिरोधानमात्रस्यावश्यं वक्तव्यत्वेन स्वाभाविकधर्मनाशासिद्धेः, अ न्यथाऽसत्कार्यवादप्रसङ्गस्स्यात्, नचेष्टापत्तिः, तस्य श्रुतिस्मृति न्यायविधुरत्वात्, त्वयाऽनभ्युपगमाच्च, असत्कार्यवादस्य न्यया

विधुरत्वप्रपंचनमस्मत्कृततार्किकमोहप्रकाशादौद्रष्टव्यं ॥ किंचजीवस्यापहतपाप्मत्वसत्यसङ्कल्पत्वादिकं त्वया स्वाभाविकमित्यङ्गीकृतं तस्य जीवे संसारदशायामदर्शनेन स्वाभाविकत्वं न स्यात्, त्वदीयमोक्षस्यापि जन्यत्वेनानित्यत्वंच स्यात्, नचेष्टापत्तिः, मोक्षनित्यत्वबोधकश्रुतिस्मृतिसूत्र विरोधप्रसङ्गात्, तस्मादुक्तदोषाणामनिवार्यत्वाद्धर्मिनाशमन्तरा स्वाभाविकधर्मनाशासिद्धिः, तथाचस्मृतिः आत्माकर्त्रादिरूपश्चेन्माकाङ्क्षीस्तर्हिमुक्ततां ॥ नहिस्वभावोभावानां व्यावर्त्तेतौष्ण्यवद्रवेरिति ॥ वराहोपनिषदि "नकर्त्ता नैवभोक्ताच नचभोजजिता तथा केवलं चित्सदानन्दब्रह्मैवाहं जनार्दनः जलस्य चंचलादेव चंचलत्वं यथारवेः तथाहंकारसम्बन्धादेवं संसार आत्मन इत्युक्तम् ॥ नद्वितीयः त्वदभिमतासिद्धेः, "ध्यायतीव लेलायतीवेत्यादिश्रुत्यास्मदभिमतपारमार्थिकनिर्धर्मकत्वसिद्धेश्च ॥ एवंच जीवस्यौपाधिकधर्म्मवत्वेपि स्वाभाविकधर्म्माभावाद्धेतोः पक्षैकदेशेऽसिद्धिः ॥ यत्तु ब्रह्मणः सर्वज्ञत्वादिधर्म्मवत्वं "यस्सर्वज्ञः सर्वविदित्यादिश्रुतिसिद्धमिति तदपि नपारमार्थिकम्, "नान्तःप्रज्ञंनबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनं, "निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम्, "साक्षी चेता केवलो निर्गुणश्चेतित्यादिनिर्गुणश्रुतिविरोधात् सर्वज्ञ

( त्वयेति ) सत्कार्यवादिनेत्यर्थः, ( त्वयेति ) आधुनिकेनेत्यर्थः ( आत्माकर्त्रादिरूपश्चेदिति ) स्पष्टोर्थः, ( नकर्त्तानैवभोक्तेति ) स्पष्टोर्थः, ( ध्यायतीवेति ) बृ॰ अ॰ ४ ब्रा॰ ३ यतो ध्यानव्यापारवती बुद्धिस्तस्तद्गत स्सन्नवभासयन्नात्मापि ध्यायतीव ध्यानंकरोतीवेति ज्ञायते नतु परमार्थतस्तत्करोति तथा लेलायतीव बुद्ध्यादिकरणेषु प्राणादिवायुषु चलत्सु तदाभासकतयातस्मान आत्मापि चलतीव नतु परमार्थत इत्यर्थः ॥ ( मि॰ ) ( नान्तःप्रज्ञमिति ) माण्डूक्यस्थम्, नान्तःप्रज्ञमिति तैजसप्रतिषेधः,नबहिःप्रज्ञमिति विश्वप्रतिषेधः,नोभयतःप्रज्ञमिति जाग्रत्स्वप्नयोरन्तरालावस्थाप्रतिषेधः, नप्रज्ञानघनमिति सुषुप्त्यवस्थाप्रतिषेधः, ( शं॰भा॰)( निष्कलमिति ) व्याख्यातम् ( साक्षीचेतेति) व्याख्यातम्

त्वादिगुणबोधकसगुणश्रुतीनां मायिकगुणबोधकत्वोपपत्तेश्च, न च श्रुतित्वाविशेषात्सर्वज्ञत्वादिगुणबोधकसगुणश्रुतिविरोधान्निर्गुणश्रुतीनां हेयगुणराहित्यार्थपरत्वोपपत्तेश्च सगुणश्रुतीनां स्वाभाविककल्याणगुणबोधकत्वमेव किन्नस्यादितिवाच्यम्, तत्परातत्परश्रुतीनां मध्ये तत्परश्रुतीनां प्रबलत्वात् गुणविशिष्टस्य घटवदनित्यत्वनियमात्तवब्रह्मणोप्यनित्यत्वप्रसंगात् सू० रूपादिमत्वाच्च विपर्य्ययोदर्शनादितिसूत्रेण सूत्रकृता गुणविशिष्टनामानित्यत्वस्य प्रतिपादितत्वाच्च, यदपि निर्गुणश्रुतीनां हेयगुणराहित्यार्थपरत्वकल्पनंतदप्ययुक्तम्, श्रीकृष्णे परमात्मनि तेषां बाहुल्योपलम्भात्, अतएव पैङ्गलोपनिषदि "तत्प्रतिबिम्बं यत्तदीश्वरचैतन्यमासीत् स स्वाधीनमायः सर्वज्ञः सृष्टिस्थितिलयानामादिकर्त्ता जगदङ्कुररूपो भवतीतिवाक्येन मायाविशिष्टस्य सर्वज्ञत्वादिकमुक्तम्, अतएव तत्त्वमस्यादिमहावाक्यार्थविवरणावसरे तत्रैव तृतीयाध्याये "तत्रपारोक्ष्यशबलः सर्वज्ञत्वादिलक्षणो मायोपाधिः सच्चिदानन्दलक्षणो जगद्योनिस्तत्पदवाच्यो भवतीत्युक्तम्, तथा सर्वसारोपनिषदि "सत्यंज्ञानमनन्तमानन्दं सर्वज्ञत्वाद्युपेतं मायोपाधिकं तत्पदार्थः परमात्मा सर्वोपाधिविनिर्मुक्तं निर्विशेषचिन्मात्रं सदद्वैतमानन्दममायं ब्रह्मेत्युम्, तथाशुकरहस्योपनिषदि "कार्योपाधिरयंजीवः कारणोपाधिरीश्वरइत्युक्तम्, तस्माज्जीवेशयोरौपाधिकधर्म्मवत्वेपि पारमार्थिकधर्माभावाद्विरुद्धधर्म्माक्रान्तत्वादित्यस्य हेतोः स्वरूपासिद्धेः, जीवोब्रह्माभिन्नः

( रूपादिमत्वाच्चेति ) ब्रह्म सूत्रे अ० २ पा २ सू० १५ सूत्रार्थस्तु भवन्मते जगत्कारणस्य रूपादिमत्वादणुत्वनित्यत्वविपर्ययः स्थूलत्वमनित्यत्वंच प्रसज्येत लोके रूपादिमतः पटादेःतथादर्शनादिति, (ब्रा०)( अतएवेति ) विशिष्टस्यानित्यत्वप्रसङ्गादेवेत्यर्थः ॥ ( तत्प्रतिबिम्बमिति ) अत्र प्रथमतच्छब्देनमायापरामर्शः अवशिष्टमतिरोहितम् ॥( तत्रपारोक्ष्येति ) तत्र पूर्वोक्ते तत्त्वमसीतिवाक्येइत्यर्थः, पारोक्ष्यशबलःपरोक्षइत्यर्थः, शिष्टंस्पष्टम् ॥ (सत्यंज्ञानमिति )तत्पदवाच्यार्थमुक्त्वा तल्लक्ष्यार्थमाह ( सर्वोपाधीत्यादिना) (कार्योपाधिरिति) कार्यमविद्या कारणंमाया

सच्चिदानन्दरूपत्वात् ब्रह्मवदितिसत्प्रतिपक्षबाधाच्च नानुमान विरोधः, नचोक्तानुमाने हेत्वसिद्धिरितिवाच्यम्, पूर्वजन्मनि कृतेन पुण्येन पापेन मयेदमिदानीमनुभूयते तथेदानीं क्रियमाणेन कर्मणा मम जन्मान्तरे किम्भविष्यति किन्नभविष्यतीति कालत्रयानुसन्धायित्वेन कालत्रयाबाध्यत्वरूपसत्यत्वस्य, ईश्वरादिसकलप्रपंचसद्भावासद्भावसाक्षित्वेन चिद्रूपत्वस्य, धनपुत्रपिण्डेन्द्रियप्राणापेक्षया स्वस्य निरतिशयप्रेमास्पदत्वेनानन्दरूपत्वस्यच, स्वास्मिन्पण्डितपामरादिभि स्सर्वैरनुभूयमानत्वात्, "अविनाशीवाअरेयमात्मा, "अजोनित्यः, "आत्मनैवायंज्योतिषास्ते, "अत्रायंपुरुषःस्वयंज्योतिः, "हृद्यन्तर्ज्योतिःपुरुषः, "तदेतत्प्रेयःपुत्रात्प्रेयो वित्तात्प्रेयोन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मेत्यादिश्रुति सिद्धत्वाच्च ॥ यदपि "द्वासुपर्णेत्यादिश्रुति विरोध इत्युक्तं तदत्यन्तमपेशलं, लोकप्रसिद्धे स्वर्गापवर्गशून्ये "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, "उदरमन्तरं

( अविनाशीति ) व्याख्यातम् ॥ ( अजोनित्यइति ) कठोपनिषत्स्थम्, नजायतइत्यजः जन्मशून्यः अतएव नित्यः कालत्रयाबाध्यः ॥ ( आत्मनैवेति ) वृ० अ० ४ ब्रा ३ आत्मरूपेणैव ज्योतिषा प्रकाशकेन पदार्थेनायंपुरुषः कार्यकरणसंघातः आस्ते उपवेशनादिव्यवहारं करोतीत्यर्थः ॥ ( हृद्यन्तरिति ) वृ० अ० ४ ब्रा० ३ हृदि लक्षणया हृदयस्थबुद्धौ बुद्धावन्तर्वर्त्तमानं ज्योतिः स्वप्रकाश आत्मा पुरुषः पूर्ण इत्यर्थः; ( तदेतत्प्रेयइति ) वृ० अ० १ ब्रा० ४ तदेतत्प्राणपिण्डसमुदायादन्तरतरं पुत्रात्प्रियत्वेनप्रसिद्धात्प्रेयः प्रियतरं वित्ताच्च दैवमानुषादपरज्ञानसुवर्णादेः प्रेयःप्रियतरं पुत्रादेरन्यस्मात्प्रियत्वेन प्रसिद्धात्सर्वस्मात्प्रेयः प्रियतरं किंतद्यदयमात्मा, ( मि० ) ( मृत्योरिति ) कठोपनिषत्स्थम्, इह ब्रह्मण्यनानाभूते परस्मादन्योहं मत्तोन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यत्युपलभते स मृत्योर्मरणान्मरणं मृत्युं पुनःपुनः जन्ममरणभावमाप्नोति प्रतिपद्यते तस्मात्तथा नपश्येदित्यर्थः ॥ ( शं० भा० ) ( उदरमिति ) तैत्तिरीयब्रह्मवलीस्थम्, अस्य "यदाह्येवैषएतस्मिन्, इत्यादिः, उच्छब्दोप्यर्थकः अरशब्दोऽल्पार्थकः अन्तरशब्दो भेदार्थकः एषलौकिकः एतस्मिन्ब्रह्मणि अल्पमपि भेदं स्वातिरिक्तत्वं यदा कुरुते स्वस्माद्भेदेन ब्रह्म पश्यति अथ तदैव तस्य जन्ममरणादि संसार

कुरुते अथ तस्य भयंभवतीत्यादिश्रुत्युक्तानर्थफलप्रदेशुक्तिरूप्यव दनुभवमात्रसिद्धे जीवेशभेदे स्वतःप्रमाणभूतायाः श्रुतेस्तात्पर्या योगात्, येन वाक्येन यत्र प्रतीत्युत्पादनेन मानाभावप्रयुक्ता सत्वशङ्का निवर्त्तते तस्य तत्र तात्पर्यं, अन्यथा तस्य तदर्थ त्वमेव नस्यात्, यत्परःशब्दः स शब्दार्थ इति न्यायात्, किंच अस्याः श्रुतेः पूर्वोदाहृतकाल्पनिकभेदप्रतिपादक वराह रुद्रहृदय नृसिंहतापिन्यादि श्रुत्यन्तरानुसारित्वेन पारमार्थिकभेदबोधकत्वा सम्भवादौपाधिक भेदप्रतिपादकत्वमेव स्वीकर्त्तव्यं, अन्यथा तासां श्रुतीनां निर्विषयत्वं स्यात्, किंच "तत्त्वमसि, "अहंब्रह्मा स्मीत्याद्यनन्यार्थबोधक मध्यमोत्तमपुरुषप्रयोगघटित जीवेशा भेदबोधकश्रुत्यन्तरविरोधाच्चास्य मन्त्रस्य अग्निर्हिमस्य भेषजमि त्यादिवल्लोकप्रसिद्धभेदानुवादकत्वमङ्गीकार्यम् ॥ अन्यथा तस्य प्रामाण्यमेव न स्यादपूर्वत्वाभावात् ॥ किंच त्वन्मतानुसारेणास्य मन्त्रस्य जीवेशपरत्वमभ्युपेत्य भेदे तात्पर्याभाव इत्युक्तम् ॥ व स्तुतस्तु कर्मफलभोक्त्र्या बुद्धेस्सकाशात्पुरुषं विविच्य "अनश्न न्नन्यो अभिचाकशीतीत्यनेन पुरुषस्य सुखदुःखभोक्तृत्वलक्षणसं साराभावमेव स बोधयति "तयोरन्यःपिप्पलंस्वाद्वत्तीतिसत्वमन श्नन्नन्यो अभिचाकशीत्यनश्नन्नन्यो अभिपश्यतिज्ञस्तावेतौ सत्व क्षेत्रज्ञाविति पैङ्गिरहस्यब्राह्मणेनैवमेव व्याख्यानात् ॥ नचात्रत्य सत्वक्षेत्रज्ञशब्दयोरपि जीवेशपरत्वमितिवाच्यम्, तयोरन्तःकर णशारीरपरतया प्रसिद्धत्वात् ॥ अत्रैव पैङ्गिरहस्ये "तदेतत्सत्वंये न स्वप्नंपश्यति अथयोयं शारीर उपद्रष्टा सक्षेत्रज्ञस्तावेतौ सत्व क्षेत्रज्ञावित्युत्तरेण ग्रन्थेन सत्वक्षेत्रज्ञशब्दयोर्बुद्धिजीवपरतया व्या ख्यातत्वाच्च ॥ ननु येनस्वप्नंपश्यतीत्यत्र स्वप्नदर्शनक्रियायाःकर्त्ता येनेत्यनेन तृतीयांतेनोच्यते सच कर्त्ता जीवएव तथा क्षेत्रज्ञशब्दा

भयं भवति जीवब्रह्मभेदस्य वास्तवत्वाभावाभिप्रायेणाल्पमपीत्युक्तं,हिशब्दःश्रुत्य न्तरप्रसिद्धिद्योतकः (वि०का) (तयोरन्यइति) (तदेतत्सत्वमितिच) श्रुतिः स्पष्टार्था

भिहितस्तु परमेश्वरः सोपि स्वप्नद्रष्टा भवितुमर्हति तस्य सर्वज्ञ त्वात्तथाचास्यापि ब्राह्मणवाक्यस्य जीवेशपरत्वमितिचेन्न, प श्यतीत्यत्र कर्त्रर्थस्य तिङ्प्रत्ययेनाभिहितत्वाद्येनेति कर्त्रर्थंतृती याया असम्भवेन करणेतृतीयाया अभ्युपेयत्वात्, स्वप्नद्रष्टुःक्षेत्र ज्ञस्य शारीर इति शारीरत्वविशेषणादीश्वरस्य व्यापकत्वेन श रीरान्तर्वर्त्तमानत्वेप्याकाशवच्छारीरत्वाविशेषणासम्भवाच्च ॥ यत्तुये नेतीत्थंभावे तृतीया येनजीवेन विशिष्टः परमात्मा स्वप्नंपश्यती त्युच्यते स्वप्नद्रष्टृत्वंजीवद्वारापरमात्मविशेषणंभवतीति न विरोध इत्युक्तम्, तदसङ्गतम्, परमात्मनोजीवद्वारास्वप्नद्रष्टृत्वाद्यङ्गीकारे तद्द्वारैवदुःखित्वदुष्टत्वपापित्वादीनांप्रसङ्गात्, ननुयदीयंश्रुतिरचे तनाया बुद्धेरत्तीतिभोक्तृत्वं प्रतिपादयेत्तर्ह्यस्याः प्रत्यक्षविरुद्धार्थप्र तिपादकत्वेन "आदित्योयुपोभवति, "यजमानःप्रस्तर इत्यादिवा क्यवत्स्वार्थे प्रामाण्यन्नस्यादितिचेन्न,इष्टापत्तेः,नहीयंश्रुतिर्जीवस्य भोक्तृत्वप्रतिपादनाय प्रवृत्ता अपितु तत्र तदभावबोधनद्वारा तद्या थात्म्यस्वरूपप्रतिपादनाय, तस्माद्यथाऽयोदहतीतिवाक्यं दाहक स्वाभाववतो लोहपिण्डस्य वन्हितादात्म्येन दाहकत्वं बोधयति तथाऽचेतनाया बुद्धेरपि चैतन्यतादात्म्याद्भोक्तृत्वप्रतिपादनद्वारा जीवस्यासंसारिब्रह्मरूपत्वबोधनार्थमस्याः प्रवृत्तत्वात्स्वार्थे प्रामा ण्याभावेप्यादित्योयूपोभवति अयोदहतीत्यादिवाक्यवत्प्रामाण्यो पपत्तिः,तथाच श्रुत्यन्तरम् "पुरुषस्यकर्तृत्वभोक्तृत्वसुखदुःखादि लक्षणश्चित्तधर्मः,"कामस्सङ्कल्पोविचिकित्साश्रद्धाऽश्रद्धा धृतिरधृ

( आदित्योयूपइति ) यूपः अष्टास्त्रित्व खादिरत्वादिश्रुत्युक्तविशेषः यज्ञगतपशु बन्धनार्थः स्तम्भस्तत्राकाशस्थादित्याभेदासम्भवादादित्यपदं तेजास्विपरम्,( यज मान इति ) प्रस्तरो दर्भमुष्टिस्तत्र यजमानाभेदासम्भवादत्र यजमानपदंयज्ञ निर्वाहकपरम् ॥ ( पुरुषस्येति ) मुक्तिकोपनिषत्स्थम्, अत्र चित्तधर्म इत्यु क्त्याकर्तृत्वादेरात्मधर्मत्वं निराकृतम् ॥( कामस्सङ्कल्पइति)बृ० अ० १ ब्रा० ५

तिह्रीर्धीर्भीरित्येतत्सर्वं मनएवेति, अत्रेदंतत्वं, चिज्जडयोरुभयोः जडत्वापरिणामित्वाभ्यां स्वतःकर्तृत्वभोक्तृत्वाद्यसम्भवेन परस्पराध्यासादेवानिर्वचनीयकर्तृत्वादिकमुत्पद्यते तद्विवेकजनितेन स्वस्वरूपसाक्षात्कारेण तन्नाशात् स्वस्वरूपावस्थानात्मिका मुक्तिरिति, एतदभिप्रायेणैव महोपनिषदि "स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोहन्त्ववेदनमित्युक्तम्, यत्तु द्वाविमौपुरुषौलोके इत्यादि स्मृतिविरोध इत्युक्तम्, तत्तु विरोधाधिकरणन्यायेन प्रत्याख्येयम्, आमुक्तेर्भेदएवस्याज्जीवस्यचपरस्यच ॥ मुक्तस्यतुनभेदोस्ति भेदहेतोरभावतः ॥ उपद्रष्टानुमन्ताच कर्ताभोक्तामहेश्वरः ॥ परमात्मेतिचाप्युक्तो देहेस्मिन्पुरुषःपरः ॥ क्षेत्रज्ञंचापिमांविद्धि सर्वक्षेत्रेषुभारतेत्यादिस्मृत्यन्तराविरोधाच्च ॥ यत्पुनरुक्तं "तत्त्वमस्यादिवाक्यानिजीवेश्वरसाम्यं बोधयन्तीति तन्मन्दम्, प्रदर्शितेनप्रकारेण "तत्त्वमस्यादिवाक्यानां मुख्यार्थे सम्भवतिसत्यमुख्यार्थकल्पनाया अन्याय्यत्वात्, आत्माएकःविभुत्वादाकाशवदित्यागमानुगृहीतानुमानविरोधेनात्मनानात्वासिद्धेश्च ॥ किंचात्रप्रष्टव्यः किंजीवस्येश्वरसाम्यं यत्किंचिदंशेन चेतनत्वेन रूपेण ब्रूषे, उत सर्वांशेन सर्वज्ञत्वादिना, नाद्यः तस्यलोकप्रसिद्धत्वेन श्रुतिप्रतिपाद्यत्वायोगात्, नद्वितीयः, असम्भवात्, सम्भवेप्यनेकेश्वरप्रसंगेन जगदु

कामः स्त्र्यादिविषयसम्बन्धाभिलाषः, संकल्पः इदंनीलमिदं शुक्लमिति विषयविशेषावधारणं, विचिकित्सा संशयज्ञानं, श्रद्धाऽदृष्टार्थेष्वास्तिक्यबुद्धिः, अश्रद्धा तद्विपरीताबुद्धिः, धृतिर्धारणं देहाद्यवसादेसत्युत्तम्भनं, अधृतिस्तद्विपर्ययः, ह्रीर्लज्जा, धीःप्रज्ञा, भीर्भयमित्येवमादिकं सर्वं मनएव मनोविकारत्वात्सुवर्णं कुण्डलमितिवन्मनोभेदेन तद्धर्मत्वं कामादीनामवधार्यते आत्मधर्मत्वभ्रांतिर्व्यावर्त्यइत्यर्थः (कर्तृत्वादिकमुत्पद्यतइति) चित्तादात्म्येन चिदध्यस्ताबुद्धिः कर्त्र्याद्यात्मना परिणमते बुद्ध्यविवेकाच्चिदात्मनःकर्त्रादिरूपवृत्तिव्यक्तचैतन्यवत्वंकर्तृत्वादिकं भातीत्यर्थः, ( स्वरूपावस्थितिरिति ) स्पष्टोर्थः ( आमुक्तेरिति ) भेदहेतोरविद्याया अभावतः निरस्तत्वात् ( उपद्रष्टेति, क्षेत्रज्ञंचेतिच ) गीतात्रयोदशाध्यायस्थम्

न्मथनप्रसंगादेकेश्वरप्रतिपादकश्रुतिस्मृतिविरोधाच्च, किंचतत्त्वम
सीत्यत्र तत्त्वंपदयोरनुभूयमानं सामानाधिकरण्यं नतयोर्भिन्नार्थ
त्वे संभवति स्तम्भकुम्भपदयोस्तददर्शनात्, नापिवैश्वदेव्यामि
क्षेत्यादिवदेकार्थाभिधायकत्वेन, तद्वत्तद्धितादेरेकार्थसमर्प्पकस्येहा
दर्शनात्, तथाचाहुः आमिक्षांदेवतायुक्तां वदत्येवैषतद्धितः॥ आमि
क्षापदसान्निध्यात्तस्यैवविषयार्पणमिति, नापि तत्त्वमर्थयोर्नीलोत्प
लमितिवद्गुणगुणिभावेन, उभयोरपिद्रव्यत्वात्, नापि कुण्डलसुव
र्णवत्कार्यकारणभावेन, नित्यत्वादविकृतत्वाच्च, नापि भूम्यूषरादिव
दंशांशिभावेन, निरवयवत्वात्, तस्मात् श्रुत्यन्तरेषु विज्ञानघनमा
त्रत्वावधारणान्नेतिनेतीत्यशेषविशेषप्रत्याख्यानेन निर्द्धर्मिकत्वाव
धारणाच्च न केनापिप्रकारेण तत्त्वमस्यादिवाक्यानां संसृष्टार्थ
निष्ठत्वशंकावकाशंलभते इतिसिद्धं॥ किंच नचेदंवाक्यं त्वमिंद्रो
सीतिवत् स्तुतिपरं, नवकृत्वोभ्यासवैयर्थ्यप्रसंगात्, नहि स्तुतिः
पुनः पुनः परिचोदनापूर्वकं क्वचिदभ्यस्यते, अतएव नार्थवादः, अ
नन्यशेषत्वाच्च, नह्यस्मिन्प्रकरणेऽन्यत्किंचित्प्रधानवाक्यमुपलभ्य
ते, यच्छेषत्वेनेदमर्थवादरूपंभवेत्, नापि राजपुरुषे राजायमितिव
दौपचारिकं, अप्रमितभेदयोरैक्यस्यौपचारिकत्वानुपपत्तेः, नापि
विपर्ययः संशयोवा संभवति, श्रुतेः स्वतःप्रामाण्यात्, तदेवं तत्त्वं
पदयोरखण्डार्थनिष्ठत्वेन सामानाधिकरण्यं वाक्यार्थांशे विरोधा
द्विनालक्षणामनुपपद्यमानं भागत्यागलक्षणयोपपद्यत एव, त
स्मात्प्रत्यक्षादीनां विरोधस्याभासत्वाद्विषयसिद्धिः॥ यत्पुनरुक्त
मनादिभावत्वादज्ञानस्य नाशाऽप्रतियोगित्वमिति तदयुक्तम्,
त्वदुक्तानुमानस्य चित्त्वेन सोपाधिकत्वात्, अज्ञानमनित्यं परिच्छि
न्नत्वात्परिणामित्वाज्जडत्वाच्च मृद्वदिति सत्प्रतिपक्षबाधत्, नराशि
रः कपालं शुचि प्राण्यंगत्वाच्छङ्खवत्, मरुः पाषाणमय इत्याद्य

( एकार्थेति ) यथात्र विशिष्टैकार्थबोधकत्वं न तथा तत्र तदीयाभिन्नत्वमि

नुमानवदागमेन बाधाच्च, आत्मनि साध्यव्यापकता, प्रधाने चित्वाभावात्साधनाव्यापकतेत्युपाधिसमन्वयोबोध्यः, यत्तु कृतश्रवणस्यापि दुःखनिवृत्त्यदर्शनादिति तदसत्, जनकयाज्ञवल्क्यादीनां दुःखित्वाद्यनुपलम्भात्, "ज्ञात्वा देवं मृत्युपाशापहानिः, "देवंमत्वा धीरोहर्षशोकौ जहाति, "तरतिशोकमात्मवित्, "अभयंवै जनक प्राप्तोसि, इत्यादिश्रुतिभिरुत्पन्नसाक्षात्काराणां दुःखनिवृत्तिप्रतिपादनाच्च ॥ नच वसिष्ठादीनां दुःखित्वं पुराणादिषु श्रूयत इति वाच्यम्, तस्य विरोधाधिकरणन्यायेन बाधितत्वात्, रामकृष्णादिवदभिनयमात्रपरत्वोपपत्तेश्च, नह्याधिकारिकाणां योगारूढानामुत्पन्नब्रह्मसाक्षात्काराणां पुत्रादिना किंचित्प्रयोजनमस्ति, "किम्प्रजयाकरिष्यामो येषां नोऽयमात्मायंलोक इत्यादिश्रुतिदर्शनात् ॥ येषुपुनराधुनिकेषु साहङ्काराभिनिवेशजनितं दुःखित्वादिकमुपलभ्यते ते नोत्पन्नसाक्षात्काराः, "अहम्ब्रह्मेतिचेद्वेद साक्षात्कारः स उच्यते, यस्यानुभवपर्यन्ताबुद्धिस्तत्वेप्रवर्त्तते तद्दृष्टिगोचरास्सर्वेमुच्यन्तेसर्वपातकैः, उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयोगुणाः अयत्नतोभवन्त्यस्य नतुसाधनरूपिणः, इति वराहोपनिषदादिवचनात्, ननूत्पन्नसाक्षात्कारिष्वपि दुःखित्वाद्युपलब्धिरितिचेन्न, तेषां तत्वसाक्षात्कारध्वस्ताज्ञानानामज्ञानकार्यभूतप्रारब्धासिध्या तन्मूलकदुःखित्वाद्युपलब्धेर्दुर्घटत्वान्निष्प्रपंचे ब्रह्मणि लौकिक्यादि त्रिविधप्रपंचोपलब्धिव

त्यादिरूपेण ॥ ( ज्ञात्वेति,देवंमत्वेति,तरतिशोकमिति, अभयमिति ) श्रुतयोव्याख्याताः ॥ ( किंप्रजयेति ) बृ॰ अ॰ ४ ब्रा॰ ४ येषां नोऽस्माकं परमार्थदर्शिनामयं नित्यसन्निहितोऽशनायाद्यतीतः आत्मैवायंलोकः पुरुषार्थस्तेवयम्पुत्रादिभिः किंकरिष्याम इत्यर्थः, ( मि॰ ) ( अहंब्रह्मेति, यस्यानुभवेतिच ) वराहोपनिषत्स्थम्, तत्वे आत्मरूपे अनुभवपर्यन्ता साक्षात्कारपर्यन्ता, स्पष्टमन्यत् ॥ ( उत्पन्नेति ) अयं नैष्कर्म्यसिद्धावप्युदाहृतोऽस्ति,साधनरूपिणः साधनं कारणं तत्साध्यरूपाः प्रयत्नसाध्या इतियावत्, यद्वा करणत्वस्य स्वसाध्यक्रियानिरूपितत्वात् तदभावे करणत्वमपि नास्त्येवेति साधनरूपित्वाभावः,( लौकिक्यादीति)

त्सर्पाभाववति रज्जौ सर्पोपलब्धिवच्च दुःखाभाववति विदुषि दुःखि त्वाद्युपलब्धेस्त्वदज्ञानविजृम्भितत्वोपपत्तेश्च, प्रपंचितंचैतद्भगवता भाष्यकृता उत्पन्नेप्यात्मविज्ञाने प्रारब्धंनैवमुंचति ॥ इतियच्छ्रूयते शास्त्रे तन्निराक्रियतेधुना । तत्वज्ञानोदयादूर्ध्वं प्रारब्धंनैवविद्यते ॥ देहादीनामसत्वात्तु यथास्वप्नोविबोधतः ॥ कर्मजन्मान्तरीयंयत्प्रा रब्धमितिकीर्त्तितं ॥ तत्तुजन्मान्तराभावात्पुंसोनैवास्तिकर्हिचित् ॥ स्वप्नदेहोयथाध्यस्तस्तथैवायंहिदेहकः ॥ अध्यस्तस्यकुतोजन्म जन्माभावेहितत्कुतः ॥ उपादानंप्रपंचस्य मृद्भाण्डस्येवकथ्यते ॥ अज्ञानंचैववेदान्तैस्तस्मिन्नष्टेक्वविश्वता ॥ यथारज्जुंपरित्यज्य स र्पंगृह्णातिवैभ्रमात् ॥ तद्वत्सत्यमविज्ञाय जगत्पश्यतिमूढधीः ॥ रज्जुरूपेपरिज्ञाते सर्पखण्डंनतिष्ठति ॥ अधिष्ठानेतथाज्ञाते प्रपंचः शून्यतांगतः॥ देहस्यापिप्रपंचत्वात्प्रारब्धावस्थितिःकुतः ॥ अज्ञानि

लौकिकी ( पारमार्थिकी ) शास्त्रीया ( व्यावहारिकी ) आनुभाविकी ( प्राति भासिकी ) चेति त्रिविधा प्रपंचोपलब्धिर्यथाऽज्ञजनानां भवति तथेत्यर्थः ॥ ( कर्मजन्मान्तरीयमिति ) वर्त्तमानदेहारंभकमित्यर्थः॥( जन्मान्तराभावादिति ) आत्मनः स्वतःकर्तृत्वाभावात्कालत्रयेपि जन्म नास्तीतिभावः( तत्कुतइति ) ज न्माभावे तत्प्रारब्धं कुतः न कुतोपीत्यर्थः ॥ ( उपादानमिति ) कारणंद्विविधं निमित्तमुपादानंचेति तत्र निमित्तंनामोत्पत्तिमात्रकारणं उपादानन्तूत्पत्तिस्थिति लयकारणं तत्रवेदान्तैः“मायान्तुप्रकृतिं विद्यादित्यादिभिः प्रपंचस्योपादानमज्ञानं पठ्यते चकाराद्ब्रह्मापि, अत्रायंभावः न केवलंब्रह्मैव जगत्कारणं निर्विकारत्वात्, नापि केवलमज्ञानं जडत्वात्तस्मादुभयं मिलित्वैव जगत्कारणं भवतीति, “स त्यानृतेमिथुनीकरोतीत्यादिश्रुतेः, तत्रदृष्टान्तः भाण्डस्य घटकरकादेर्मृदिव मृ त्पिण्डइव तत्र जलस्थाने ब्रह्म पिण्डीकरणसामर्थ्यसाम्यादज्ञानन्तु मृत्तिकास्था ने आवरकत्वसाम्यात्, तत्रब्रह्मणोऽविनाशित्वाद्ब्रह्मज्ञानेन तस्मिन्नज्ञानएव नष्टेस ति विश्वता जीवजगदीश्वरात्मकजगद्भावः क्व न क्वाप्यस्तीत्यर्थः ॥ तस्मिन्नष्टे क्वविश्वतेत्युक्तंप्रपंचयन् पूर्वोक्तंप्रारब्धाभावं सदृष्टान्तमुपसंहरतिसार्द्धेन ( रज्जुरू पइति ) ननु जीवन्मुक्तस्य ज्ञानिनः प्रारब्धाभावेसति “अत्रब्रह्मसमश्नुत इत्या दिश्रुतिः प्रारब्धं किमर्थं वक्तीत्याशंकामपनुदति ( अज्ञानीत्यर्द्धेन ) श्रुतिरज्ञा

जनबोधार्थं प्रारब्धंवक्तिवैश्रुतिः ॥ क्षीयन्तेचास्यकर्माणि तस्मिन्दृष्टेपरावरे ॥ बहुत्वंतन्निषेधार्थं श्रुत्यागीतंचयत्स्फुटं ॥ उच्यतेऽज्ञैर्बलाच्चैतत्तदानर्थद्वयागमः॥ वेदान्तमतहानंच यतोज्ञानमिति श्रुतिरिति ॥ तथाच प्रत्यक्षादिविरोधाभावेन विषयप्रयोजनसम्भवाद्ब्रह्मात्मज्ञानाय वेदान्तविचारः कर्त्तव्य इतिसिद्धम् ॥ उक्तंच भगवतासूत्रकृता सू० अथातोब्रह्मजिज्ञासेति, यतः "तद्यथेहकर्म्मचितो लोकःक्षीयते एवमेवामुत्रपुण्यचितोलोकः क्षीयत इत्याद्या यत्कृतकंतदनित्यमितिन्यायवती श्रुतिरेव "अपामसोमममृताअभूम, "अक्षय्यंहवैसुकृतंचातुर्मास्ययाजिनो भवतीत्यादिश्रुतिप्राप्तस्य वैराग्यादिसाधनासम्भवहेतुभूतस्य कर्मफलस्यानित्यत्वंदर्शय

निजनबोधार्थं प्रारब्धं वक्तीत्यर्थः, ज्ञानेन सर्वव्यवहारकारणेऽज्ञाने नष्टेसति ज्ञानिनः कथं व्यवहार इत्यज्ञानिभिराक्षिप्ते प्रारब्धादिति तद्बोधार्थमितिभावः ॥ किन्तर्हि ज्ञानिबोधार्थंवक्ति श्रुतिरितिचेदुच्यते ( क्षियन्तेचेति ) "भिद्यतेहृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टेपरावरे, इतिश्रुत्या कर्माणीतिबहुत्वं यत् स्फुटंगीतं तत्तन्निषेधार्थं प्रारब्धाभावप्रतिपादनार्थं, अन्यथा संचितक्रियमाणापेक्षया द्वित्वंगेयं तथा नगीतमतो ब्रह्मात्मसाक्षात्कारात् चिज्जडग्रन्थिभेदेन संचितक्रियमाणप्रारब्धाख्यत्रिविधकर्मक्षयान्ते परमपुरुषार्थो भवतीति ज्ञानिबोधार्थं श्रुतिर्वक्तीतिभावः ॥ उक्तवैपरीत्ये बाधकमाह (उच्यतइति) एतत्प्रारब्धमज्ञैः श्रुतितात्पर्यानभिज्ञैर्बलादविवेकसामर्थ्याच्चेदुच्यते यथार्थतया प्रतिपाद्यते चकारादद्वयात्मा नदृश्यते तदानर्थद्वयागमो दोषद्वयप्राप्तिः तत्र प्रारब्धरूपस्य द्वैतस्याङ्गीकारे अनिर्मोक्षप्रसंग एकोदोषः, मोक्षाभावे ज्ञानसंप्रदायोच्छेदरूपो द्वितीयो दोषइति, नकेवलं दोषद्वयस्यैव प्राप्तिरपितु वेदान्तमतहानंच वेदान्तमतस्याद्वैतस्य हानं त्यागो भविष्यति प्रारब्धग्रहणरूपस्य द्वैतस्य याथार्थ्यादित्यर्थः, तर्हि किंप्रतिपत्तव्यमित्यतआह ( यत इति ) यतो यस्याःसकाशात् ज्ञानं भवति तादृशी सा श्रुतिः प्रतिपत्तव्येतिशेषः ॥ ( विद्यारण्य० ) ( तद्यथेति ) ( अपामसोममितिच ) व्याख्यातं ॥ ( अक्षय्यमिति ) शतपथकाण्ड २ अ० १ ब्रा० १ चतुर्षुमासेषु भवश्चातुर्मास्यो यागविशेषः तेनेष्टवान् चातुर्मास्ययाजी करणेयजइतिकिनिप् तस्यसुकृतं चातुर्मास्ययागानुष्ठानजं अक्षय्यं

ति अतो विवेकवैराग्यादिसाधनचतुष्टयसंपत्तेस्संभवादथ तदन न्तरं ब्रह्मजिज्ञासा प्रत्यगभिन्नब्रह्मज्ञानाय वेदान्तविचारः कर्त्त व्य इतिसूत्रार्थः, यद्वा अथसाधनचतुष्टयसंपत्यनन्तरमतः साध नचतुष्टयसंपन्नस्य कर्मभिर्मोक्षासिद्धेर्मोक्षसाधनब्रह्मज्ञानाय वेदा न्तवाक्यविचारः कर्त्तव्य इत्यर्थः, एवंच श्रुतिसूत्राभ्यां ब्रह्मविचा रस्य कर्त्तव्यत्वावगमात्संसारतपनतापतप्तो यथोक्ताधिकार्युपहा रपाणिर्वेदवेदांगपारगं ब्रह्मानन्दामृताब्धिलहरीमध्यस्थं गुरुमुप गम्य मनोवाक्कायकर्म्मभिस्तत्सेवापुरस्सरं ब्रह्मविचारं कुर्यादिति फलितम्, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं, "आचार्यवान्पुरुषोवेद, "मुमुक्षवः पुरुषाः साधनचतु ष्टयसंपन्नाः श्रद्धावन्तं सत्कुलप्रभवं श्रोत्रियं शास्त्रवात्सल्यं गुण वन्तमकुटिलं सर्वभूतहितेरतं दयासमुद्रं सद्गुरूं विधिवदुपसं गम्य, तद्विद्धिप्रणिपातेन परिप्रश्नेनसेवया, इत्यादिश्रुतिस्मृतिद र्शनात्,नचाधीतवेदवेदांगेनाधिकारिणा स्वयमेव विचारः कर्त्तुंश क्यते किंगुरूपसदनेनेतिवाच्यम्, "तद्विज्ञानार्थं स गुरुमेवाभिग च्छेदिति सावधारणश्रुत्या विचाराङ्गभूतगुरूपसदनस्यावश्यकत्वे न विधानात् "आचार्यवान्पुरुषोवेदेति वेदनस्याचार्य्याल्लभ्यत्वसू चनेनापूर्वत्वप्रतिपादनात्, "यथा जात्यन्धस्य रूपज्ञानं नविद्यते तथा गुरूपदेशेनविना कल्पकोटिशतैरपि तत्वज्ञानं नजायत इति महानारायणोपनिषदि गुरूपदेशमन्तरा तत्वज्ञानोत्पत्तेरसा

फलानुभवेनक्षेतुमशक्यं भवति, क्षय्यजय्यौशक्यार्थे इतिसाधुः ॥ (तद्विज्ञा नार्थमिति) मुण्डकस्थम्, तद्विज्ञानार्थं तस्य ब्रह्मणो विज्ञानं साक्षात्कारस्तदर्थं समुमुक्षुः समित्पाणिः गुरोरग्निहोत्रार्थं समिधःपाणौयस्य ईदृशःसन् श्रोत्रियं छ न्दोऽधीते इतिश्रोत्रियः तं ब्रह्मनिष्ठं गुरुमाभिमुख्येन गच्छेदित्यर्थः ॥ (आ चार्य्यवानिति) छां॰ अ॰ ६ ख॰ १४ आचार्य्यं उपदेष्टा तद्वान्पुरुषः आ त्मतत्वं वेद साक्षात्कुरुते इत्यर्थः, एतेनाचार्य्योपदेशः सत्स्वरूपावगमे उपाय इत्युक्तं भवति ॥ (तद्विद्धीति) गीता अ॰४ श्लो॰ ३४ (यथाजात्यन्धस्येति)

क्षान्निषेधात्, "यस्यदेवेपराभक्तिरित्यनेन गुरुभक्तेर्विद्यान्तरङ्गसाध नत्वबोधनात्, गुरुंविनास्वकृतविचारे यथार्थत्वाऽयथार्थत्वशंकासंभवेन तस्याप्रतिबद्धब्रह्मापरोक्षज्ञानजनकत्वायोगात्, वेदविहित गुरूपसदनादिनियमादृष्टाऽसहकृतस्वकृतविचारजनितज्ञानस्याप रोक्षकल्पस्य मोक्षजनकत्वायोगाच्च॥ अथ गुरुः प्राप्ताधिकारिणे सम्यगात्मतत्वमुपदिशेत्, "तस्मैसविद्वानुपसन्नाय सम्यक् प्रशांतचित्ताय शमान्विताय, उपदेक्ष्यन्तितेज्ञानं ज्ञानिनस्तत्वदर्शिन इत्यादिश्रुतिस्मृतिभ्यः ॥ उक्तंच भगवताभाष्यकृता प्रशांत चित्ताय जितेन्द्रियाय प्रहीणदोषाय यथोक्तकारिणे ॥ गुणान्विताया नुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवइति ॥ शिष्यउवाच हेभगवन्ममायंघटो ममायंपुत्र इत्यादिवन्ममेदंशरीरं ममेदंच क्षुर्ममेयंबुद्धिर्ममायंप्राण इत्यादिप्रतीत्या देहादिभ्यो भिन्नत्वेन प्रतीयमानः कर्त्ता भोक्ता सुखी दुःखीत्यादिप्रतत्या कर्तृत्वाद्याश्रयत्वेनच प्रतीयमानः कोस्म्यहं॥ गुरुरुवाच हेसोम्य त्वं परिपूर्णपरब्रह्मसच्चिदानन्दरूपोसि॥ शिष्यउवाच हेभगवन्यद्यहं परिपूर्णस्तर्हि परिपूर्णस्याकाशवत्कृत्याश्रयत्वायोगात्कथं मयि प्रतीयमानकर्तृत्वादेरुपपत्तिः, कथंवानन्दरूपे मयि सांसारिकदुःखाश्रयत्वोपपत्तिश्चस्यात्॥ गुरुरुवाच हेप्रियदर्शन निर्विशेषचिन्मात्रे सुखैकरसे निरवयवे त्वयि कर्तृत्वादिकं नास्त्येव॥ शिष्यउवाच हेभगवन्नहंकर्त्ताऽहंदुःखीति स्वात्मनि प्रतीयमानकर्तृत्वादेस्तत्प्रतीतेर्वा कथमपलापःकर्तुंशक्यः ॥ गुरुरुवाच हेसोम्य नहि वयं प्रतीत्यपलापंकुर्मः किंतु प्रतीतिमात्रप्रसिद्धमरुमरीचिकाजलवत्स्वाप्निकसुखदुःखादिवच्च स्वात्मनि प्रतीतिमात्रप्रसिद्धकर्तृत्वा

जात्यन्धो जन्मान्धः रूपं शुक्लकृष्णादि ॥ ( तस्मैसविद्वानिति ) मुण्डकस्थम्, विद्वानात्मज्ञः स गुरुः सम्यक् यथाशास्त्रं उपसन्नाय समीपमागताय शमान्विताय बाह्येन्द्रियोपरमयुक्ताय तस्मै मुमुक्षवे ब्रह्मविद्यां प्रोवाचेत्यग्रिमेण संबन्धः ॥ ( उपदेक्ष्यन्तीति ) गीता अ० ४ श्लोक ३४ ॥ ( प्रशान्तचित्तायेति ) उपदेशसहस्रिकागतपार्थिवप्रकरणस्थः श्लोकः ७२ ॥

दिरपिवस्तुतो नास्तीत्येव वदामः॥ नहि प्रमाणेनविनाप्रतीतिमात्र सिद्धस्य कर्तृत्वादेःसत्यत्वं तत्कृतंवा विकारित्वमात्मानःसंभवति नहि प्रातीतिकस्यमरीच्युदकादेस्सत्यत्वं तत्कृतंवा मरुभूम्या देशार्द्रीभावादिकं दृष्टं ॥ शिष्यउवाच हेभगवन् "सहिकर्त्ता, "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः, "इडांभक्षयन्ति, "जयति, "जुहोति, "सत्यंवद धर्मंचरेत्यादिश्रुतीनांतत्रप्रमाणत्वसंभवात् कथंकर्तृत्वादीनांप्रतीतिमात्रसिद्धत्वं वर्णयितुं युक्तं ॥ गुरुरुवाच हेसोम्यतासांश्रुतीनां प्रतीतिमात्रसिद्धकर्तृत्वाद्यनुवादकत्वमेवांगीकार्य्यम्, अन्यथा"ब्राह्मणोयजेत, "जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादिश्रुत्या ब्राह्मण्यादिविशिष्टदेहस्यैवात्मत्वप्रसंगेन तस्य परलोकफलप्राप्तिबोधकश्रुत्यन्तरविरोधापत्तिः स्यात्, किंच शब्दप्रवृत्तिनिमित्तजातिगुणक्रियादिधर्मरहितस्यात्मनः शब्दागोचरतया कथं ता श्रुतयोऽयमात्मा कर्त्ताभोक्तेत्यसंगमात्मानं बोधयेयुः, उक्तंचेदंकठरुद्रोपनिषदि "निमित्तंकिंचिदाश्रित्य खलुशब्दःप्रवर्त्तते यतोवाचोनिवर्त्तन्ते निमित्तानामभावतः निर्विशेषेपरानन्दे कथंशब्दःप्रवर्त्तते, इति ॥ नह्युदाहृतश्रुतीनां प्रातीतिकक

(सहिकर्त्तेति)वृ॰अ॰४ ब्रा३ हि यस्मात्स आरोपितजीवात्माकर्त्ता परिणम्यमानवासनादिसाक्षित्वेन न स्वत इत्यर्थः, (मि॰)(आत्मेन्द्रियेति) कठोपनिषत्तृतीयवल्लीस्थम्, आत्मेन्द्रियमनोयुक्तं शरीरेन्द्रियमनोभिः सहितं संयुक्तमात्मानं भोक्तेति संसारीत्याहुर्मनीषिणो विवेकिनः नहि केवलस्यात्मनो भोक्तृत्वमस्ति बुद्ध्याद्युपाधिकृतमेव तस्य भोक्तृत्वं तथाच श्रुत्यन्तरं केवलस्याभोक्तृत्वमेव दर्शयति"ध्यायतीव लेलायतीवेत्यादि, (शं॰भा॰)(इडांभक्षयन्तीति)अस्य यजमानपंचमाइत्यादिःयजमानपंचमा अध्वर्युहोत्रुद्गातृब्रह्माणऋत्विजःइडाशब्देन काष्ठमयपात्रविशेषवाचिनालक्षणया तत्स्थादनीयद्रव्यमुच्यते तद्भक्षयन्तीत्यर्थः॥(यजतीति)(जुहोतीतिच ) ब्राह्मणस्थम्,यागंकुर्यात्, होमंकुर्यादिति क्रमेणार्थः,लिङर्थेलेडितिविधावुभयत्रलेट् ॥( सत्यंवदेति ) ( धर्मंचरेतिच) तैतरीयशिक्षावल्लीस्थम्, ( ब्राह्मणोयजेतेति )ब्राह्मणत्वजातिविशिष्टो यागं कुर्यादित्यर्थः॥( जातपुत्रइति) जाताःपुत्रोयस्य कृष्णाःकेशायस्य अस्थविरः अधिकारी अग्नीन् गार्हपत्यदक्षिणाग्न्याहवनीयानादधीत ॥ ( निमित्तंकिंचिदिति ) निमित्तं जातिगुणाक्रियादिधर्म

तृत्वाद्यनुवादकानां पारमार्थिककर्तृत्वादिविधायकत्वं संभवति, तस्यापूर्वत्वाभावात्, किंचात्मनो रूपाद्यभावेन बाह्येन्द्रियप्रत्यक्ष विषयत्वाभावान्नतन्निष्ठकर्तृत्वादौप्रत्यक्षं प्रमाणं,नाप्यनुमानार्थाप त्तीसंभवतः, स्वसमानजातीयप्रत्यक्षव्यक्त्यंतराभावेन व्याप्तिग्रहा भावादात्मस्वरूपसंवद्धतया लिंगविशेषाग्रहणाच्च ॥ नाप्युपमान म्, अवयवाद्यभावात्स्वसदृशवस्त्वन्तराभावाच्च ॥ नाप्यनुपलब्धिः, अभावरूपत्वाभावात्, अतःपरिशेषात्प्रातीतिकमेव कर्तृत्वादिक मितिध्येयं ॥ शिष्यउवाच हेभगवन् शब्दप्रवृत्तिनिमित्तजात्यादि रहितस्य परमात्मनः शब्दागोचरत्वे तत्रात्मादिशब्दानां वृत्य भावात्,“तंत्वौपनिषदंपुरुषंपृच्छामीति तस्य श्रूयमाणमौपनिषद त्वं कथं घटेत ॥ गुरुरुवाच हेसौम्य अहमिति प्रतीय माने परमात्मोपाधावहंकारे शब्दप्रवृत्तिनिमित्तानां जातिगुणक्रिया दीनां विद्यमानत्वात्तत्रैव परमात्माऽविविक्ताहंकारे वाचकत्वेन स्थिता आत्मादिशब्दाः प्रत्यगभिन्नपरमात्मानं लक्षणया बोधयं ति नतु साक्षात्, लक्षणयापि यत्र शब्दस्य तात्पर्यं प्रतीयते सएव शब्दार्थः, यत्परःशब्दः सशब्दार्थ इति न्यायात्,अन्यथाऽ तत्पराणामर्थवादानां स्वार्थेतात्पर्यवत्त्वेन सकलोप्यर्थवादः प्रमा णंस्यात्, तस्मादात्मादिशब्दानामहंकारातिरिक्ते परमात्मनिनि र्विशेषे शुक्तिरूप्यवत्कल्पनिकानिर्वाच्यसंबन्धेन वृत्तेरौपनिषद त्वमस्य घटतएव ॥ शिष्यउवाच हेभगवन् परमार्थतः कर्तृत्वाऽ भाववति परमात्मनि कर्तृत्वादयोधर्माःकथं प्रतीयन्ते ॥ गुरुरुवाच हेसौम्य दाहकत्वाभाववत्ययःपिण्डे वह्नितादात्म्याध्यासाद्दाहक त्वप्रतीतिवद्देहान्तःकरणतादात्म्याध्यासादात्मनि कर्तृत्वभोक्तृत्वा दयो धर्माः प्रतीयन्ते, उक्तंचेदंपैङ्गलोपनिषदि प्रथमाध्यायान्ते,

रूपं वाचः शब्दाः निमित्तानां जात्यादीनां यच्छब्दश्रुतेस्तत्रेतिशेषः ॥ ( तन्त्वौप निषदमिति ) वृ ० अ ० ३ ब्रा ० ९ तंत्वब्रह्मौपनिषदमुपनिषत्स्वेव विज्ञेयं पुरुषमशनायादिधर्मविवर्जितं हे शाकल्य त्वा त्वां पृच्छामीत्यर्थः ॥ ( भि० )

"शरीरत्रयतादात्म्यात्कर्तृभोक्तृतामगमत्, जाग्रत्स्वप्नसुषुप्तिमूर्छा मरणधर्मयुक्तो घटीयंत्रवदुद्विग्नो जातो मृत इव कुलालचक्रन्याये न परिभ्रमतीति ॥ शिष्यउवाच हेभगवन्सावयवयोर्वन्ह्यः पिण्डयोरविवेकादयः पिण्डे वन्हितादात्म्याध्यासोयुक्तः, सावयवनिरवयवयोर्जडचेतनयोरत्यंत विविक्तयोरविवेकाभावात्कथं निरवयवात्मनि सावयवदेहान्तः करणाद्यध्यासोयुक्तः, गुरुरुवाच हेसोम्य सावयवनिरवयवयोः सर्पच्छिद्रयोरत्यंतविविक्तत्वेपि भूमिच्छिद्राज्ञानवशात्तस्मिन्निरवयवे सावयवसर्पाद्यध्यासवज्जडचेतनयोरत्यंत विविक्तत्वेपि चैतन्याज्ञानवशात्तस्मिन्निरवयवे परमात्मनि सावयवदेहान्तःकरणाद्यध्यासोयुक्ततरः ॥ शिष्यउवाच हेभगवन्यथा निर्विशेषचिन्मात्रे परमात्मनि कर्तृत्वाद्यभावो निष्कलत्वादिश्रुतिसिद्धस्तथा जडेपि कर्तृत्वाद्यभावःप्रत्यक्षसिद्धः एवंचान्तःकरणादेर्जडत्वात्तत्र कर्तृत्वादिधर्माभावात्कथं तत्संबंधात्तत्र तत्प्रतीतिर्युक्ता ॥ गुरुरुवाच हेप्रियदर्शन स्वतःक्रियाशून्ये लोहखण्डे स्वतःक्रियाशून्यलोहमणिसन्निधानेन क्रियोत्पत्तिवदात्मसन्निधानेनांतःकरणादौ कर्तृत्वादिधर्माणामुत्पत्तिर्भवति तस्मात् तत्तादात्म्यात्तत्र तत्प्रतीतिर्युक्तैव ॥ ॥ शिष्यउवाच हेभगवन्यद्यात्मसन्निधिमात्रेण जडे कर्तृत्वादीनां प्रादुर्भावस्तर्हि तस्य विभुसन्निधानस्य सर्वत्र विद्यमानत्वात्सर्वोपि

(शरीरत्रयेति)कारणशरीरं लिङ्गशरीरं स्थूलशरीरमितिचशरीरत्रयम्,दिगाद्यधिष्ठातृदेवतानुग्रहीतैरिन्द्रियैःशब्दादिविषयानुभवावस्था जाग्रत्, जाग्रद्भोगप्रदकर्मोपरमे सति इन्द्रियोपरमे पूर्वानुभवजन्यसंस्कारोद्भूतविषयानुभवावस्थास्वप्नः, जाग्रत्स्वप्नोभयभोगप्रदकर्मोपरमेसति स्थूलसूक्ष्मदेहाभिमाननिवृत्तिद्वारा विशेषविज्ञानोपरमात्मिकायाबुद्धेः कारणात्मनावस्थितिःसुषुप्तिः, मुद्गरादिप्रहरणानन्तरं विशेषविज्ञानोपरमावस्थामूर्छा,शरीरप्राणसंयोगध्वंसोमरणम्,घटीयंत्रवदिति परिभ्रमादिसाम्यान्वेतिघटीयन्त्रं कूपादितोजलोद्धारकयन्त्रं हरठ इतिप्रसिद्धम्,जातोमृतइवेति इवशब्दःजातशब्देनापि सम्बध्यते,सचात्मनोनित्य त्वाजन्ममरणयोरवास्तववत्त्व

जडोऽन्तःकरणवत्कर्तृत्वादिधर्मेण प्रतीयेत ॥ गुरुरुवाच हेसोम्य लोहताम्रादिधातूनां पृथिवीत्वाऽविशेषेप्ययःकांतसान्निधानाद्धातुविशेष एव लोहखण्डे योग्यतावशात्क्रियोत्पत्तिवदात्मसन्निधेः सर्वत्रविद्यमानत्वेपि योग्यतावशादन्तःकरणादावेव कर्तृत्वादिधर्माणां प्रादुर्भावो भवति,नान्यत्र ॥ शिष्यउवाच हेभगवन्नयःकान्तेऽयःखण्डचेष्टाहेतुभूता काचन शक्तिस्तत्स्वरूपानतिरिक्ता वर्त्तते तद्वशात्तत्सान्निधिमात्रेणतत्रचेष्टाजायते निर्विशेषेतु सच्चिदानन्दरूपे परमात्मन्यन्तःकरणनिष्ठकर्तृत्वादिवृत्तिजनकीभूततादृशशक्त्यभावात्कथं तत्सन्निधिमात्रेण तत्रतद्वृत्तीनां प्रादुर्भावो भवितुमर्हति ॥ गुरुरुवाच हेसोम्य शृणु रहस्यं सच्चिदानन्दरूपे परमात्मनि या चिच्छब्देनबोध्यमाना स्वप्रकाशात्मिका चित् तत्स्वरूपाभेदेन वर्त्तते सा परमात्मनश्चिच्छक्तिरित्युच्यते,तस्याश्चचितश्चैतन्यात्मकतया द्रष्टृत्वादियोग्यतैव शक्तित्वम्, साचयोग्यता स्वरूपात्मिकैव तदभिन्नाखंडचिदेकरसस्वरूपपरमात्मसन्निधिमात्रेणांतःकरणादौ कर्तृत्वादिवृत्तयः प्रादुर्भवंति नच तत्सन्निधेर्नित्यत्वात्सदैवतासांप्रादुर्भावः स्यादितिशङ्क्यम्,लोहचेष्टायाः परिमार्ज्जनादिसापेक्षत्ववद्वृत्तीनां प्रादुर्भावस्यापि कालादृष्टादिसापेक्षत्वात्, परिहताचेयंशङ्का भगवता सूत्रकृता स्मृतिपादोपान्त्याधिकरणे सू०वैषम्यनैर्घृण्ये न सापेक्षत्वा त्तथाहिदर्शयतीति, अथसाखण्डचिदानन्दरूपा चिच्छक्तिस्तत्तद्वृत्त्युपहितासती तत्तद्वृत्त्युपाधिभेदैर्विज्ञातिर्मतिः श्रुतिःस्पृष्टिर्दृष्टिः रसयतिर्घ्रातिरुक्तिर्गतिरित्यादिरूपेण

सूचनार्थः,( वैषम्यनैर्घृण्येति ) ब्रह्मसूत्रम्,अ०२ पा०१ सूत्र२४ ब्रह्म किं प्राणिकर्मसापेक्षं जगत्कर्तृ निरपेक्षंवा नाद्यः अनीश्वरत्वप्रसङ्गात्, द्वितीये वैषम्यनैर्घृण्ये प्रसज्येयातां, कांश्चित्तिर्यगादीनत्यन्तदुःखिन उत्पादयति,कांश्चिन्मनुष्यादीन् सुखदुःखसाधारणान्, कांश्चिद्देवादीनत्यन्तसुखिन्, इतिवैषम्यं, सर्वसंहर्तृत्वाच्च नैर्घृण्यं, ततश्च सावद्यत्वं प्रज्येत,तस्मान्निरवद्यस्येश्वरस्य नजगत्कर्तृत्वमितिशंका निरासार्थमिदंसूत्रं,वैषम्यनैर्घृण्ये नस्यातां कस्मात् सापेक्षत्वात्प्राणिकर्मसापेक्षत्वात् कर्मानपेक्षत्वेहि वैषम्यादिस्यात् नसापेक्षत्व इत्यर्थः, नच सापेक्षत्वेऽनीश्वरत्वं,

भिद्यते, नतु स्वरूपतः, सोप्यखंडचिच्छक्त्यभिन्नःपरमात्मा जन्म विनाशशून्यया बुद्ध्यादितत्तद्वृत्त्युपाधिभेदाद्भिन्नया स्वरूपभूतया चिच्छक्त्यासर्वंविषयजातं सामान्यतोविशेषतश्चानुभवन्नास्ते, स्वभावतस्तु बुद्ध्याद्युपाधिविनिर्मुक्तः सच्चिदानन्दरूपपरमात्मा निर्विकारः शुद्धएव ॥ उक्तंचेदमुपदेशसहस्त्रिकायांश्रीमदद्वैतविद्याप्रतिष्ठापकैःश्रीशंकरभगवत्पादैः दृष्टिःस्पृष्टिःश्रुतिर्घ्रातिर्मतिर्विज्ञातिरेवच॥ शक्तयोन्याश्चभिद्यंते चिद्रूपत्वेप्युपाधिभिरिति॥ श्रुतयोपीममेवार्थंबोधयंति"श्रोत्रस्यश्रोत्रंमनसोमनोयद्वाचोहवाचंसउ प्राणस्यप्राणश्चक्षुषश्चक्षुः, "नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यते,इत्याद्याः

भृत्यादिसेवानुसारेण फलदातूराज्ञोऽराजत्वादर्शनात्, ईश्वरस्तु पर्जन्यवद्रष्टव्यः यथा तत्तद्बीजेसत्यपि नपर्जन्यंविना अंकुरोत्पत्तिस्तद्वदिति, कर्मणैवोपपत्तौ किमर्थमीश्वरस्वीकार इतिचोद्यं श्रुत्या पराकृतमित्यादिभाष्ये द्रष्टव्यम्, नन्वीश्वरस्यकर्मसापेक्षत्वं कुत इत्याह ( तथाहिदर्शयतीति ) श्रुतिः स्मृतिश्चेत्यर्थः, "एषह्येवसाधुकर्मकारयति तं यमेभ्योलोकेभ्य उन्निनीषते एष उ एवासाधुकर्मकारयति तं यमधोनिनीषत इति, "पुण्योवैपुण्येनकर्मणाभवति पापःपापेनेत्याद्याश्रुतिः, यमुन्निनीषते ऊर्ध्वंनेतुमिच्छतीश्वरस्तं साधुकर्म्मकारयति पूर्वजन्मकृतसुकृतवशादितियोजना, पुण्यःसुखी पापोदुःखी, स्मृतिस्तु येयथामांप्रपद्यन्ते तांस्तथैवभजाम्यहम्, इत्याद्याद्रष्टव्या, ( ब्र॰ ) ( दृष्टिःस्पृष्टिरिति ) मतिःसंशयः विज्ञातिर्निश्चयः अन्याःशक्तयः रसनस्मृतिगर्वाद्याः वस्तुतश्चिद्रूपत्वेपि उपाधिभिरन्तःकरणवृत्तिविशेषरूपैर्भिद्यन्ते ॥ ( श्रोत्रस्यश्रोत्रमिति ) केनोपनिषत्स्थम्, श्रोत्रस्य श्रवणात्मकश्रोत्रवृत्तेः श्रोत्रं तद्वृत्त्योपहिताखण्डसच्चिदानन्दात्मकस्य कूटस्थस्यात्मनःस्वरूपभूता शब्दावभासिका श्रुतिशक्तिः, जडवृत्तेस्तदवभासकत्वासंभवेन तदावारकाज्ञाननिवृत्तिमात्रप्रयोजकत्वात्, तथाचश्रुतिशक्तेर्विशिष्टरूपेणानित्यत्वेपि स्वरूपतो नित्यत्वात्तत्स्वरूपमखण्डं ब्रह्म बोधयति श्रोत्रस्यश्रोत्रमिति, अत एव वाक्यभाष्ये शब्दोपलब्धृरूपतयावभासकत्वं न स्वतः, श्रोत्रस्याचिद्रूपत्वादात्मनश्चिद्रूपत्वात् यच्छ्रोत्रस्योपलब्धृत्वेनावभासकत्वं तदात्मनिमित्तत्वात् श्रोत्रस्यश्रोत्रमित्युच्यत इतिवाक्येन निर्विशेषं चैतन्यमात्रं श्रोत्रशब्देनोपलक्षितं, एवमग्रेपि बोध्यम् ॥ ( नहिद्रष्टुरिति ) बृ॰ अ॰ ४ ब्रा॰ ३ द्रष्टुः कुटस्थचिन्मात्ररूपस्य स्वरूपभूता या दृष्टिस्तस्या हि यस्माद्विपरिलोपो

एतेनैवाभिप्रायेण शक्तितत्वाऽभिज्ञा अप्पयखंडचिच्छक्तेर्गायत्र्यपर पर्याय ब्रह्मविद्याधिनाथायाः सच्चिदानन्दरूपिण्याः श्रीभुवनेश्व र्याः परिपूर्णपरब्रह्मात्मरूपतां वर्णयन्ति ॥ उक्तंचेदं भगवता वादरायणाचार्येणदेवीगीतायां नमोविराट्स्वरूपिण्यै नमः सूत्रा त्ममूर्त्तये॥नमोऽव्याकृतरूपिण्यै नमःश्रीब्रह्ममूर्त्तये ॥ यदज्ञानाज्ज गद्भाति रज्जुसर्पस्रगादिवत् ॥ यत्ज्ञानाल्लयमाप्नोति नुमस्तांभुव नेश्वरीम् ॥ नमस्तत्पदलक्ष्यार्थां चिदेकरसरूपिणीं ॥ अखण्डा नन्दरूपांतांवेदतात्पर्यभूमिकां ॥ पंचकोशातिरिक्तांतामवस्थात्रय साक्षिणीम् ॥ नमस्त्वम्पदलक्ष्यार्थां प्रत्यगात्मस्वरूपिणीम् ॥ नमः प्रणवरूपायै नमोह्रीङ्कारमूर्त्तये ॥ नानामन्त्रात्मिकायैते करुणा यैनमोनमः ॥ सच्चिदानन्दरूपांतां गायत्रीप्रतिपादितां ॥ नमा मिह्रींम्मयींदेवीं धियोयोनःप्रचोदयादिति ॥ देव्यथर्वशिरसि "सै षाब्रह्मविष्णुरुद्ररूपिणी सैषाप्रजापतीन्द्रमनवः सैषाग्रहनक्षत्र ज्योतिः कलाकाष्ठादिविश्वरूपिणी तामहंप्रणौमि नित्यांपापहा रिणींदेवीं भुक्तिमुक्तिप्रदायिनीं अनन्तां विजयांशुद्धां शरण्यां स वंदाशिवां वियदीकारसंयुक्तं वितिहोत्रसमन्वितं अर्द्धेन्दुलसि तंदेव्या वीजंसर्वार्थसाधकं एवमेकाक्षरंमन्त्रं यतयः शुद्धचेत

विनाशो न विद्यते अग्न्युष्णत्ववदित्यर्थः ( मि० ) ( नमोविराडिति ) समष्टि स्थूलशरीराभिमानी विराट् १ समष्टिसूक्ष्मशरीराभिमानी सूत्रात्मा २ समष्टि कारणशरीराभिमानी अव्याकृतः ३ ब्रह्म शुद्धचैतन्यं ४ यदज्ञानात् यस्याश्चिद्रू पाया अज्ञानात् स्वात्मरूपत्वेनज्ञानाभावात् रज्जुस्वरूपाज्ञानाद्रज्जौ सर्पस्रग्दण्डा दिभानवदात्मनि जगद्भाति, यज्ज्ञानात् यस्याश्चिद्रूपाया ज्ञानात् स्वात्मत्वेनसाक्षा त्कारात् परिदृश्यमानं जगल्लयमाप्नोति तां नुमइत्यर्थः,प्रणवरूपायै वाच्यवाचकयो रभेदारोपात्तदात्मिकायै, एवमग्रेपि वोध्यम्,( सच्चिदानन्दरूपामिति ) देवीभाग वतस्यायंचरमश्लोकः ॥( सैषेति ) सा पूर्वोक्तशुद्धचिद्रूपा एषादेवी कला अष्टाद शनिमेषाःत्रिंशन्निमेषाःकाष्ठा इत्यादिर्यो विश्वस्सर्वःकालस्तद्रूपिणी विजयांविशि ष्टोनिरतिशयोजयउत्कर्षोयस्यास्तां शरण्यां शरणंरक्षणं शरणंगृहरक्षित्रोरित्यमरः तत्रसाधुश्शरण्या तत्रसाधुरितियत्, वियत् हकारः ईकारेण वीतिहोत्रोरेफस्तेन

तसः ध्यायंतिपरमानन्दमयाज्ञानाम्बुराशयः, "एकैवसर्वत्रवर्त्तते तस्मादुच्यतएका एकैवविश्वरूपिणी तस्मादुच्यतेऽनेका अत एवोच्यतेऽज्ञेया अनन्तालक्ष्याजैकानेका मन्त्राणांमातृकादेवी शब्दानांज्ञानरूपी ज्ञानानांचिन्मयातीता शून्यानांशून्यसाक्षिणी यस्याःपरतरंनास्ति सैषादुर्गाप्रकीर्तितेति ॥ बव्हृचोपनिषदि "ॐ देवीह्येका अग्रआसीदित्युपक्रम्य ब्रह्मविष्णवादीनांसृष्टिमुक्त्वा "देशकालवस्त्वन्तरासङ्गा महात्रिपुरसुन्दरीवै प्रत्यक्चितिः सैवात्माततोन्यदसत्यमनात्मा अतएषा ब्रह्मसम्पत्तिः,इत्यादिना पराशक्तेःपरब्रह्मस्वरूपत्वं महावाक्यलक्ष्यत्वंचोक्तं, सू० छन्दोभिधानान्नेतिचेन्न तथाचेतोर्पणनिगदात्तथाहिदर्शनमित्यादिसूत्रतद्भाष्याभ्यांच गायत्र्यास्तत्त्वमस्यादिलक्ष्यार्थरूपाया ब्रह्मरूपत्वं रुप

अर्द्धेन्दुनाऽर्द्धानुस्वारेणच सहितः, तथाच बीजरूपं ह्रीं इति मंत्रं मंत्रलक्ष्यं शुद्धचिद्रूपं ध्यायन्ति अभेदेनानुसंधत्ते ॥ ( एकैवसर्वत्रेति ) इयमपिपूर्वश्रुत्यैकस्थाना; अतएव विश्वरूपापन्नत्वादेव, अज्ञेयाइयत्तया ज्ञातुमशक्या पुरस्थितघटादिवादियंरूपेत्येवं ज्ञातुमशक्या मंत्राणांप्रणवादीनां जनिका या मातृका अकारादिक्षकारान्त पंचाशद्वर्णरूपा तस्यादेवीप्रकाशिका शब्दानां यत् ज्ञानं श्रावणं तद्रूपिणी ज्ञानानां वृत्तिरूपाणां उपधेया या चित्तद्रूपा तथाप्यतीता उपाधिरहिता शून्यानां सर्वेषामभावानां प्रलयकालिकानां साक्षिणी नित्यत्वात्, अस्या द्रष्टृत्वेनप्राप्तंसविशेषत्वं परिहर्तुं विशेषणं शून्येति वस्तुत उपाधिशून्या निर्विशेष चैतन्यरूपेत्यर्थः, उक्तार्थमेवद्रढयति यस्याः परतरमिति ॥ ( देवीह्येकेति ) देशेन कालेन वस्त्वन्तरेण देशकालभिन्नवस्तुनाच संगःपरिच्छेदस्तद्रहिता महान्ति जगदुत्पत्तिस्थितिलयकर्तृत्वान्महान्ति यानित्रीणीपुराणि ब्रह्मविष्णुरुद्रदेहानि तेषुस्थितासुंदरी चिद्रूपा अत आत्मत्वादेषा ब्रह्मसम्पत्तिः ब्रह्मणो ब्रह्मत्वस्य सम्पत्तिः प्राप्तिर्ययासा ॥ ( छन्दोभिधानादिति ) ब्रह्मसूत्रे अ० १ पा० १ सू० २५ "गायत्रीवाइदंसर्वं भूतंयदिदंकिंचेतिवाक्ये, गायत्रीशब्दप्रतिपाद्यस्य ब्रह्मत्वस्थापनार्थमिदं सूत्रम्, तत्र पूर्वावयवेनपूर्वपक्षः; उत्तरमुत्तरावयवेनेति बोध्यम् ॥ सूत्रार्थस्तु छन्दोभिधानात् "गायत्री वाइदं सर्वंभूतं यदिदं किंचेति वाक्ये गायत्र्याख्यस्य छन्दसोऽभिधानान्नगायत्रीप्रतिपाद्यस्य ब्रह्मत्वमितिचेन्न, तथा चेतोर्प्पण निगदात् तथागायत्र्याख्यछन्दोद्वारेण तदनुगते ब्रह्मणि चेतोर्प्पणस्य चित्तसमाधानस्य निगदादभिधानात् अतःसर्वात्मकंब्रह्मैवात्र प्रतिपाद्यते नह्यक्षरसन्निवेशमात्राया

ष्टमेवोक्तम्, शिवस्यब्रह्मरूपत्वं "शान्तंशिवमद्वैतमित्यादिनिग मान्तेषु प्रसिद्धतरमतो वैदिकशैवानांशाक्तनांचाद्वैतमेवसिद्धान्तः॥ तत्रापि केचिद्धूर्त्तवेदबाह्याविप्रतिपन्नावर्त्तन्ते, कपिलकणादाक्षपाद जैमिनिपतंजलिप्रभृतीनां तीर्थकाराणान्तु द्वैतवादस्यप्रासिद्धत्वेपि तैर्मुक्तिदशायांद्वैतभानानङ्गीकारात् तदङ्गीकृतद्वैतवादस्य व्यावहा रिकविषयतया संकोचसंभवाच्च परमार्थतस्तेषामप्यद्वैतासिद्धान्त एव तात्पर्यविषय इतिनिश्चीयते, प्रदर्शितंचैतत् षट्तन्त्रीसारे चि न्मात्रंसांख्ययोगश्रुतिशिखरविदः कर्मिणश्चानिषेधाज्जैनानित्योर्ध्वं गन्तजडमिवकणभुग्गौतमश्चत्रिबौद्धी ॥ निर्ज्ञेयज्ञानधारांस्वविरह मवदन्शून्यदेहात्मभाजौ मोक्षंतेस्मिन्विकल्पा निरहमि भवद्वैत

गायत्र्याः सर्वात्मत्वं संभवति, तत्र दृष्टान्तः तथाहिदर्शनामिति "एतंह्येवबव्हृचा महत्युक्थेमीमांसन्ते एतमग्नावध्वर्य्यव एतंमहाव्रतेछन्दोगा इत्यत्र श्रुत्यन्तरे वि कारद्वारेण ब्रह्मणउपासनं दृश्यत इतिदर्शनंदृष्टमिति, श्रुत्यर्थस्तुएतमेवात्मानमृग्वे दिनोमहत्युक्थेप्रधानेशस्त्रे तदनुगतमुपासते, यजुर्वेदिनोग्नौ क्रतौ तदनुगतं, सामवे दिनोमहाव्रताख्येक्रतौतदनुगतं ब्रह्मानुसंदधतइति (शान्तंशिवमिति ) व्याख्यातं तीर्थकृतामद्वैतसिद्धान्तएव तात्पर्यगोचर इत्यस्य दृढीकरणार्थं व्यवहारेपूच्चावच त्वेन तीर्थकृदैकमत्याभावेनचापारमार्थिकत्वं मुक्तावेकरूपत्वेनैकमत्येनच पारमा र्थिकत्वंच ध्वनयन् तीर्थकृतांमुक्तावेकरूपत्वे वृद्धसम्मतिमाह ( चिन्मात्रमिति ) सांख्ययोगश्रुतिशिखरविदः कपिलपतंजलिव्यासप्रमुखाः चिन्मात्रं मोक्षमवदन्, कर्मिणश्च याज्ञिकाश्च यज्ञैरेवापुनरावृत्तिस्थानंप्राप्तानां "तेब्रह्मलोकेषुपरान्तकाले परामृतात्परिमुच्यन्तिसर्वे, इतिमुण्डकश्रुतया ब्रह्मणासहकैवल्यप्राप्तेरनिषेधात् प रमतमप्रतिषिद्धमनुमतं भवतीति न्यायेन चिन्मात्रमेव मोक्षमवदन्, जैनानित्यो र्द्ध्वगन्तृत्, तत् चिन्मात्रं देहलंमितं सततोर्द्ध्वगामि यदा तदामोक्षमवदन्, अथवा नित्यंचतदूर्द्ध्वगंचेति अनित्याल्लौकिकाकाशादूर्द्ध्वमलौकिककाशस्तत्रगमनं तत् मुक्तत्वमित्यर्थः, वस्तुतोऽजडमपि जडमिवरूपं मोक्षे शिष्यते इति कणादगौत मो, त्रयणां बौद्धानांसमाहारः त्रिबौद्धी सौत्रान्तिक वैभाषिक योगाचाररूपा क्ष णिकस्य स्वप्रकाशस्य विज्ञानस्य स्वाकारप्रत्ययविलये निर्द्धूतज्ञेयांशस्य या धारा अखण्ड दण्डायमाना संततिः तामेव मोक्षमवत्, शून्यदेहात्मभाजौ माध्यमिक

भानन्तुमिश्राः, इति, यद्यपि "नारायण एवेदं सर्वं यद्भूतंयच्चभव्यं निष्कलो निरंजनो निर्विकल्पो निराख्यातः शुद्धो देवएको नारायणो नद्वितीयोस्ति कश्चिद्यएवं वेद सविष्णुरेव भवति सविष्णुरेव भवतीति, "गुर्वनुज्ञया क्रमेणभक्तिनिष्ठोभूत्वा भक्त्यतिशयेन पक्वविज्ञानंप्राप्य तस्मादनायासेन शिष्यःक्षिप्रमेव साक्षान्नारायणो बभूवेत्युपनिषदिति, "मद्व्यतिरिक्तं सर्वंबाधितं मद्व्यतिरिक्तमबाधितं न किंचिदस्ति,"श्रीमन्नारायणेमय्यचंचला भक्तिश्चभवति ससम्यग्ज्ञानंच लब्ध्वा विष्णुसायुज्यमाप्नोति, इति ॥ "सर्वसाक्षिणमात्मानं वर्णाश्रमविवर्जितं ॥ ब्रह्मरूपतयापश्यन्ब्रह्मैवभवतिध्रुवम् ॥ भासमानमिदंसर्वं भानरूपंपरंपदं ॥ पश्यन्वेदान्तमानेन सद्यएवविमुच्यते ॥ देहात्मज्ञानवत् ज्ञानं देहात्मज्ञानबाधकं ॥ आत्मन्येवभवेद्यस्य सनेच्छन्नपिमुच्यते ॥ तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणंसत्याचिद्घनं ॥ विदित्वास्वात्मनोरूपं नबिभेतिकुतश्चन ॥ चिन्मात्रंसर्वगंनित्यं संपूर्णसुखमव्ययं ॥ साक्षाद्ब्रह्मैवनान्योस्मीत्येवंब्रह्मविदांस्थितिः ॥ स्वस्वरूपंतुचिन्मात्रं सर्वदासर्वदेहिनां॥ नैवदेहादिसंघातो घटवद्दृश्यगोचरइति ॥ "अविद्यातत्कार्यहीनः स्वात्मबन्धहरस्सर्वदाद्वैतवर्जित आनन्दरूपस्सर्वाधिष्ठान सन्मात्रो निरस्ताविद्यातमोमोहोहमेवेति तस्मादेवमेवममात्मानं

चार्वाकौस्वविरहं आत्माभावं मोक्षमवदताम्, निरहामि निर्मूलिताहंकारत्वेनद्वैतभानशून्ये अस्मिन् मोक्षे ते एते वादिनां शब्दजा विकल्पा निर्सोर्ध्वगत्यादयःसन्तुनाम परन्तु नतत्स्वरूपे भेदमावहन्ति, मिश्रास्तुभववत् संसारइवमोक्षे द्वैतभानं पंचधा भावमिच्छन्ति मुक्तिदशाहिपारमार्थिकी तत्रद्वैतभानानङ्गीकाराद्द्वैतमेवपारमार्थिकमितिभावः॥ (नारायण एवेदमिति ) नारायणोपनिषत्स्थ, स्पष्टोर्थः (गुर्वनुज्ञयेति) व्याख्यातम् (मद्व्यतिरिक्तमिति) महानारायणस्थम्, स्पष्टोर्थः( श्रीमन्नारायणेति) वासुदेवोपनिषत्स्थं, स्पष्टोर्थः ( सर्वसाक्षिणमिति ) वराहोपनिषत्स्थं, स्पष्टोर्थः ॥ ( अविद्यातत्कार्य्येति ) नृ० उ० ख० २ अस्य ग्रन्थस्य "एषह्यात्मानंप्रकाशयति सर्वसंहारसमर्थःपरिभवाऽसहःप्रभुर्व्याप्तः सदोज्वलः इतिपूर्वग्रन्थः, एषः पूर्वोक्तनृसिंहमन्त्रराज आत्मानं प्रकाशयति भासयति आत्मप्रकाशमुल्लिख्यदर्शयति ( सर्वैस्याद्यहमित्यन्तेन ) तस्मादात्मज्ञानस्यैवमाकारत्वात् अन्योपीतिशेषः

परंब्रह्मानुसंदध्यादेषवीरो नृसिंहएवेति ॥ "सच्चिदानन्दमात्रमेकरसं परमेव ब्रह्ममकारेण जानीयादात्मैव नृसिंहो देवः परमेवब्रह्म भवति यएवंवेद सोऽकामो निष्काम आप्तकाम आत्मकामो नतस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैवसन्ब्रह्माप्येतीहैव प्रजापतिरुवाचेति ॥ "आनन्दरूपस्सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोहमेवेति संभाव्याहमोन्तत्सद्यत्परंब्रह्म रामचन्द्रश्चिदात्मकस्सोहमोन्तद्रामभद्रपरंज्योतिरसोहमोमित्यात्मानमादाय मनसा ब्रह्मणैकीकुर्यात् सदारामोहमस्मीतितत्वतः प्रवदान्तिये नतेसंसारिणोनूनं रामएव नसंशय इत्युपनिषदिति, नारायण महानारायण वासुदेव वराह नृसिंह रामतापिन्याद्युपनिषद्वाक्याद्वैष्णवादीनामप्ययमेवसिद्धान्तः पर्यवस्यति, तथापि तैर्वेदबाह्यैर्महामोहमदिरापानमदोन्मत्तैर्विवेकभ्रष्टैर्भगवतोवासुदेवस्य पारमार्थिकं रूपमजानद्भिर्हठयोगनिष्ठैरयमद्वैतासिद्धान्तोनाङ्गीकृतः, तन्मतेतु सविशेषनिर्विशेषश्रुतीनां व्यवस्थादुर्घटैवेतिभाति, त्वयापुनर्मुमुक्षुणा कर्तृत्वादिप्रतिभानोपशान्तये

मुमुक्षुरेवमेव उक्तप्रकारेणाभेदेनैवेममात्मानं परंब्रह्मानुसंदध्यात् परब्रह्मत्वेनभवयेत् एषसाधक आत्मानृसिंहएव ॥( सच्चिदानन्देति ) नृ० उ० ख० ५ मकारेणओंकान्तर्गतेन लक्ष्यं परमेव ब्रह्म जानीयात् तज्ज्ञानमुल्लिख्यदर्शयति ( आत्मैवनृसिंहोदेव इति ) उक्तज्ञानस्यफलमाह ( परमेवेति ) ब्रह्मत्वमुपपादयति ( सोकामइत्यादिना ) स उपासकोऽकामः सर्वविषयरहितः तत्वेहेतुर्निष्कामः वितृष्णः तत्रहेतुराप्तकामःतत्वेहेतुरात्मकामः आत्मतृप्त इत्यर्थः, उक्तात्मज्ञानादज्ञानेनिवृत्ते तत्कार्याणां विषयतद्वासनानां निवृत्तिरितिभावः,ननु ज्ञानसमये ब्रह्मत्वेपि देहपातादूर्ध्वंपुनःसंसारस्स्यात् तत्कारणप्राणाद्युपलक्षितलिङ्गशरीरसत्वादित्यतआह ( नतस्यति ) तस्य विदुषःफलभोगाय दक्षिणोत्तरगत्यभावात्, समवनीयन्तेकारणेलीनाभवन्ति ( आनन्दरूपइति ) रामोत्तरता० ख० २ अहमित्योंतत्सदित्येतच्छब्दचतुष्टयबोध्यं यत्परंब्रह्म स रामचन्द्रः सकिंभूतात्मको नेत्याह ( चिदात्मकइति ) ज्ञानैकविग्रहः ( सोहमिति ) सप्रसिद्धोऽमुकपुत्रोऽमुकनप्ताऽहं असः स मनुष्यादिरूपो न किन्तु ओं ओंकाररूपः परंज्योतिस्तद्रूपः इत्येवमात्मानं प्रसिद्धमादाय तत्त्वमस्यादिव्याख्यानन्यायेन मनसाकरणेन ब्रह्मणा अविकृतेनसहैकीकुर्यात् एकीकरणेफलमाह ( सदेति ) उपनिषत्परमार्थज्ञानम् ( नारायणी० )

तत्तद्वृत्त्यंशपरित्यागेन सर्वसाक्षितयाऽनुगतप्रकाशरूपोयमात्मेति भावनीयम्, उपाधिपरामर्शमन्तरात्मनि कर्तृत्वाद्यनुपलम्भात्तेषां स्वाभाविकत्वाभ्युपगमे कर्तृत्वभोक्तृत्वादिरूपेण विक्रियमाणस्य तस्यानित्यत्वप्रसंगाच्च, तस्मादखण्डचिच्छक्त्यभिन्नपरमात्मनस्स त्तासन्निधिमात्रेणान्तःकरणादौ कर्तृत्वादिवृत्तीनां प्रादुर्भावो भवितु मर्हतीतिसिद्धं ॥ शिष्यउवाच हेभगवन्देहेन्द्रियाद्यध्यासवशादात्म नितद्धर्मप्रतीतिरितियुक्तमुक्तं, देहेन्द्रियादयःकस्मादुत्पन्नाः। गुरुरु वाच हेसोम्यानादिभावरूपानिर्वचनीयात्मावारकमूलाज्ञानादात्मा धिष्ठितात्तेषामुत्पत्तिर्जाता, अस्यचकर्तुरस्मरणादनादित्वं, ज्ञानरू पस्य परमात्मनो विभुत्वान्नित्यत्वाच्च तदभावासिद्ध्याऽभावस्य भा वपदार्थावारकत्वाप्रसिध्याचात्मस्वरूपावारकाज्ञानस्याभावरूप त्वाऽसम्भवेन "मायांतुप्रकृतिंविद्यादित्यादिश्रुतिबोधितजगदुपादा नकारणभावस्य मायाशब्दवाच्यस्याज्ञानस्य भावकार्यकारणत्वा न्यथानुपपत्याच भावरूपत्वं, यद्यज्ञानस्यसत्यत्वं तर्हि "तरतिशो कमात्मवित्, "भिद्यतेहृदयग्रन्थिः, "ज्ञात्वादेवंमृत्युपाशापहानि रित्यादिश्रुत्युक्तज्ञाननिवर्त्यत्वं नस्यात्, यद्यसत्वं तर्हि वंध्यापुत्र वत्तस्य प्रतीतिर्नस्यादतःशुक्तिरूप्यवदनिर्वचनीयत्वंचेतिबोध्यम्, इदंचअनिर्वचनीयत्वं यौक्तिकमर्य्यादयोक्तम्, श्रौतमर्यादयातु तु च्छत्वमेव तस्येति वदन्ति "तुच्छ्येनाभ्वपिहितं यदासीदित्या दिश्रुत्यवलंबिनः श्रौताः, उक्तंच तुच्छाऽनिर्वचनीयाच वास्तवी चेतिसात्रिधा ॥ मायाज्ञेयात्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैरिति, ॥ शिष्यउवाच हेभगवन्नात्माश्रितमूलाज्ञानात्कथंदेहादिप्रपंचो त्पत्तिरभूत् ॥ गुरुरुवाच हेसोम्य तदिदं सत्वरजस्तमोगुणात्मकं विक्षेपावरणशक्तिमदज्ञानं बीजाङ्कुरवदावर्त्तमानस्थूलसूक्ष्मप्रप चवासनाऽऽलयः प्रलयकालेप्रधानावस्थापन्नंसत्परमात्मैकांशे

( मायान्त्विति, तरतीति, भिद्यतइति, ज्ञात्वेतिच, ) श्रुतयः प्राग्व्याख्याताः ॥
( तुच्छ्येनेति ) ऋक्संहिता अ० ८ अ० ७ वर्ग १७ आसमन्ताद्भवतीत्याभु मितद्रवादयश्चेतिडुप्रत्ययः आभु यत् जगत् तुच्छ्येन छान्दसोयकारोपजनःतुच्छेन

आकाशेनीलिमेववर्त्तते, "पादोऽस्यसर्वाभूतानि त्रिपादस्यामृतंदिवि, विष्टभ्याहामिदंकृत्स्नमेकांशेनस्थितोजगदित्यादिश्रुतिस्मृतिषु तथोपलम्भात् ॥ नच तेन तस्य सद्वितीयत्वं शङ्क्यं, आकाशस्यापि तद्गतनीलिम्ना सद्वितीयत्वप्रसङ्गात्, अथसृष्टिसमये तस्यांमूलप्रकृतौ जतुपिण्डे सुवर्णरेणुवद्बीजेङ्कुरवच्च सूक्ष्मसंस्कारात्मना वर्तमानजविभोगादृष्टवशादात्माधिष्ठितायास्तस्याविशुद्धसत्वप्रधानादिरूपेण गुणवैषम्यं भवति, ततोविशुद्धसत्वप्रधानविक्षेपशक्तिसम्वलितमायोपहिताश्चिदात्मा नित्यमुक्तः सर्वज्ञः सर्वेश्वर इत्यादिशब्दवाच्यतां भजति, तदुपाधावावरणशक्त्यभावात्तस्य नित्यमुक्तत्वं, मायावृत्त्युपाधिभेदाद्भिन्नाभिः स्वरूपभूतचिच्छक्तिभिः सर्वंजानातीति तस्यसर्वज्ञत्वमीशितृत्वशक्तियोगादीश्वरत्वंचेतिध्येयं ॥ उक्तंचेदंमहानारायणोपनिषदि तृतीयाध्याये "यथाजपाकुसुमसान्निध्याद्रक्तस्फटिकप्रतीतिर्ब्रह्मणोपि मायोपाधिवशात्सगुणपरिच्छिन्नादिप्रतीतिः उपाधिविलयान्निर्गुण निरवयवादिप्रतीतिरित्युपनिषत्, इति ॥ सरस्वतीरहस्योपनिषद्यपि "प्रकृतित्वंततसृष्टं सत्वादिगुणसाम्यतः ॥ सत्येवाभातिचिच्छाया दर्पणेप्रतिविम्बवत् ॥ तेनचित्प्रतिविम्बेन त्रिविधाभातिसापुनः ॥

तुच्छाज्ञानेन अपिहितं च्छादितमासीत् तदित्साग्रिमेण संवन्धः( पादोऽस्येति )छां० अ० ३ ख १२ अस्योपक्रान्तस्य ब्रह्मणःसर्वाणि भूतानि तेजोवन्नदीनि सस्थावरजङ्गमानि पादः एकः पादः एकदेशइत्यर्थः, अस्यब्रह्मणः त्रयःपादा अस्येति त्रिपात् अमृतंदिवि द्योतनवृति स्वात्मनि अवस्थितं ॥ ( विष्टभ्याहामिति ) गीता अ० १० श्लो० ४२ एकांशेन एकदेशेन ॥ ( यथाजपाकुसुमेति) मायोपहितस्येश्वरत्वबोधनार्था श्रुतिरियं, स्पष्टार्था ॥( प्रकृतित्वमिति ) आश्वलायनंप्रति सरस्वत्युपदेशोयं, मया ततस्तस्माद्ब्रह्मरूपत्वात् मूलाज्ञाने सत्वादिगुणसाम्यतः सत्वादिगुणत्रयसमीकरणेन प्रकृतित्वं सृष्टमुत्पादितं तत्रेतिशेषः तत्र प्रकृतौ चिच्छाया चितोममछाया दर्पणेप्रतिविम्बवत्सत्येवाभाति तेन चित्प्रतिविम्वेन सा प्रकृतिः त्रिविधा सत्वादिगुणप्राधान्यभेदेन विष्णुरुद्रब्रह्मनामभिः अव्याकृतहिरण्यगर्भविराट् नामभिश्चत्रिःप्रकाराभवति पुनश्च एवञ्च प्रकृत्यवच्छिन्नतया प्रतिविम्बात्मना

प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च मे ॥ शुद्धसत्वप्रधानायां माया यांबिम्बितोह्यजः ॥ सत्वप्रधानाप्रकृतिर्मायेतिप्रतिपाद्यते ॥ सामा या स्ववशोपाधिः सर्वज्ञस्येश्वरस्य हि ॥ वश्यमायत्वमेकत्वंसर्व ज्ञत्वं च तस्यतु ॥ सात्विकत्वात्समष्टित्वात्साक्षित्वाज्जगतामपि ॥ जगत्कर्तुमकर्तुंवा चान्यथाकर्तुमीशते ॥ यस्त ईश्वरइत्युक्तस्सर्वज्ञ त्वादिभिर्गुणैः॥ शक्तिद्वयंहिमायाया विक्षेपावृतिरूपकं ॥ विक्षेपश क्तिर्लिङ्गादिब्रह्माण्डान्तंजगत्सृजेत् ॥ अन्तर्दृग्दृश्ययोर्भेदं बहिश्चब्र ह्मसर्गयोः ॥ आवृणोत्यपराशक्तिः सासंसारस्यकारणं ॥ साक्षिणः पुरतोभातं लिङ्गदेहेनसंयुतं ॥ चितिच्छायासमावेशाज्जीवःस्याद्व्या वहारिकः ॥ अस्यजीवत्वमारोपात्साक्षिण्यप्यवभासते ॥ आवृतौतु विनष्टायां भेदेयातेप्रयातितदिति, सचएकएव चिदात्माभुवनेश्वरः प्रकृत्युपहितस्संस्तद्गतसत्वादिगुणोपहितोविष्णवादिशब्दवाच्यतां भजते, "अथयोह खलु वावास्य राजसोंशोसौ सयोयं ब्रह्माथयो

तदवच्छिन्नतया मे पुरुषत्वमव्याकृतादिनाम्नाभवति हि यतः शुद्धसत्वप्रधानायां मायायां बिम्बितः प्रतिबिम्बितःपरमात्माऽजः ईश्वर उच्यते, ननु मायाप्रतिबिम्ब स्य तत्वेपि प्रकृतिप्रबिम्बस्य तत्वंदुर्लभं तयोर्भेदादित्यतआह ( सत्वेति ) तस्य पुरुषस्योत्कर्षमाह ( सामायेति ) ( सात्विकत्वादितिच ) सा उक्तरूपा माया हि यतःसर्वज्ञस्येश्वरस्य पुरुषस्य स्ववशा स्वाधीना उपाधिरतः वश्यमायत्वादिकं त स्योच्यते हे आश्वलायन मया ते यः सर्वज्ञत्वादिभिर्गुणैरुपलक्षित ईश्वर उक्तःस सात्विकत्वादिहेतुभ्यो जगत्कर्तुमकर्तुमन्यथाकर्तुंचेशते ईष्टे बहुवचनंछान्दसं, समष्टित्वात्समष्ट्युपहितत्वात्, ननु मायोपहितस्यापि तस्य कथं विचित्रजगत्स्र ष्टृत्वादि अत आह ( शक्तीति ) तत्र विक्षेपशक्तिकार्य्यमाह ( विक्षेपेति ) लि ङ्गं सूक्ष्मशरीरं आवरणशक्तिकार्य्यमाह ( अन्तरिति ) अन्तः प्रत्यगात्मनि दृग्दृ श्ययोः दृक्जीनात्मा दृश्यं देहादिस्तयोर्भेदं विवेकं तथा बहिरहंबुद्ध्यास्पदादन्य त्र ब्रह्मसर्गयोः ब्रह्मसच्चिदानन्दात्मकं सर्गःप्रपंचः तयोश्च भेदं आवृणोति घटःस न्नितिसत्तादात्म्येन भानात्, जीवस्वरूपमाह ( साक्षिणइति ) साक्षिणश्चितिच्छा यासमावेशात्तस्यैव पुरतो भातं भासमानं लिङ्गदेहेनसंयुतं वस्तु व्यावहारिकसंज्ञ को जीवःस्यात्, अस्य व्यावहारिकजीवस्य जीवत्वमारोपात्साक्षिण्यप्यवभासते आवृतौतु विनष्टायां जीवेश्वरभेदे याते नष्टे सति तदुपाध्युपहितं चैतन्यं प्रयाति ब्रह्मप्राप्नोति ब्रह्मरूपेणावतिष्ठतइत्यर्थः ॥ ( स्व० ) ( अथयोहेति ) मैत्रायणयुप

हखलु वावास्यतामसोंशोसौसयोयंरुद्रोऽथयोहखलुवावास्यसा त्त्विकोंशोसौसयोयंविष्णुरित्यादिश्रुतिरत्रमानं, मलिनसत्त्वप्रधान विक्षेपावरणशक्तिसंवलिताविद्योपहितश्चिदात्मातु स्वोपाध्यविद्या गतानन्तावरणशक्तिभेदभिन्नाविद्योपाधिभेदैर्वक्ष्यमाणानन्तस्थूल सूक्ष्मशरीरद्वयोपाधिभेदैश्च भिद्यमानो जीव इत्युच्यते, उपाधि स्तु कार्यानन्वयी व्यावर्त्तको वर्त्तमानश्च, यथाघटाकाशस्यघटः, विशेषणंतु कार्यान्वयि व्याकर्तकम्, यथानीलघटस्यनीलइति त योर्भेदो बोध्यः ॥ सचत्रिविधः प्राज्ञस्तैजसोविश्वश्चेति, तत्रावरण शक्तिसंवलिताविद्यावच्छिन्नो जीवःप्राज्ञः, तदुपाधेरनेकत्वात्तस्या प्यनेकत्वं, प्रकर्षेणजानातीतिप्रज्ञः प्रज्ञएवप्राज्ञः, यद्वा प्रकर्षेणा ऽज्ञः विशेषविज्ञानाभाववान् प्राज्ञः, अतएव माण्डूक्यभाष्ये प्रज्ञ प्तिमात्रमस्यैवासाधारणंरूपमितिप्राज्ञ इतरयोस्तु विशिष्टमपि विज्ञानमस्तीत्युक्तं श्रीभगवत्पादैः, तदुपाधेरहंकारादिसंस्काररूप त्वेनास्पष्टत्वात्तद्गतावरणशक्त्या तस्यप्रावृतत्वाच्चतत्वं, इदंचसुषुप्तौ नकिंचिदवेदिषमिति सर्वानुभवसिद्धम्, तदुपाधेःसंस्कारात्मना वि द्यमानदेहद्वयकारणत्वात्कारणशरीरत्वं, कोशवदात्मावारकत्वादि न्द्रियतद्विषयप्रयुक्तविक्षेपाभावेनानन्दबाहुल्याच्चानन्दमयकोशत्वं च वदन्ति, उक्तंचेदंपैङ्गलोपनिषदि "स्वरूपाज्ञानमानन्दमयको शः तत्कारणशरीरामिति ॥ शिष्यउवाच हेभगवन् तदानीमन्तःक रणतद्वृत्तीनामभावेनानन्दग्राहकाभावादानन्दबाहुल्यसत्त्वे किंमा नं मानाभावे तत्र कोविश्वासः ॥ गुरुरुवाच हेसोम्य सुषुप्तावन्तः करणतद्वृत्तीनामभावेपि तत्संस्कारात्मना विद्यमानाविद्यायां प्रा

निषत्पंचमाध्यायस्थम्, अथेतिशब्दास्तत्रैत्यस्यार्थे, उक्तासु ब्रह्मविष्णुरुद्रनाम्नीषु तनुषु मध्ये, हेतिप्रसिद्धौ, खलुशब्दोवाक्यालङ्कारे, वावेत्यवधारणे, अस्यमाया शवलस्यात्मनो य एव राजसः रजःप्रधानोंशः स असौ कोसौ योयंब्रह्मेति प्रसि द्धः एवमग्रेपि, अत्रत्यःपाठः शिवतत्त्वविवेकवेदान्तशिखामण्याद्यनुसारेण, रामती र्थकृतैतदुपनिषद्व्याख्ययातु क्रमेण रुद्रब्रह्मविष्णुघटितः पाठोस्तीति ज्ञायते, अन्यत्राप्यत्र पाठभेदो बहुलोस्ति, ( स्वरूपेति ) स्वस्यात्मनोरूपंस्वरूपं तस्या वारकं अज्ञानं आनन्दमयकोश उच्यते, तदेवकारणशरीरमुच्यत इत्यर्थः ॥

ज्ञचैतन्याधिष्ठितायां प्रियमोदाद्या अतिसूक्ष्मा अविद्यावृत्तयः प्रादुर्भवन्ति तद्वृत्युपहिताभिरावरणशक्त्यावृताभिः स्वरूपभूतचिच्छक्तिभिः प्राज्ञः स्वात्मानन्दबाहुल्यमनुभवति, सोयमनुभवस्तवापि जातएव, सचात्रप्रमाणं, अन्यथा सुप्तोत्थितस्य सुखमहमस्वाप्समिति सुखविषयकस्मृतिर्नस्यात्, नह्यननुभूतविषया स्मृतिरुपपद्यते अतिप्रसङ्गात्, तैत्तिरीयास्त्वन्नमयादिकोशपंचकं पक्षित्वेनवर्णयन्त आनन्दमयंप्रकृत्य "तस्यप्रियमेवशिरः मोदोदक्षिणः पक्षः प्रमोदउत्तरःपक्ष इतिप्रियादिवृत्तीः शिरआद्यवयवत्वेन वर्णयन्ति, माण्डूक्येतु "आनन्दभुक्चेतोमुखःप्राज्ञ इत्युक्तं, तथाचोदाहृतश्रुतिद्वयमप्यत्र मानमितिध्येयं ॥ शिष्यउवाच हेभगवन्नविद्यायां संस्कारात्मना विद्यमानदेहद्वयस्य कथंप्रादुर्भावो जातः ॥ गुरुरुवाच हेसोम्य सृज्यमानप्राणिकर्मवशादीश्वरस्य स्वोपाधिभूतबुद्धिस्थानीय मायायामिदमिदानीं स्रष्टव्यमित्याकारिका सृष्टिविषयिकेक्षणात्मिका वृत्तिर्जायते, "तदैक्षतबहुस्यां

( तस्यप्रियमिति) तैत्तरीयब्रह्मवल्लीपंचमानुवाकस्थम्, प्रियमोदप्रमोदाः सात्त्विकवृत्तिप्रति विम्बिता आनन्दाः, तत्राभीष्टपुत्रादिदर्शनजन्यंप्रियं तल्लाभजन्योमोदः तत्कृतोपकारजन्यःप्रमोदः(विद्यारण्य०) (आनन्दभुगिति ) माण्डूक्यस्थम्,आनन्दः स्वरूपभूतानतिशय आनन्दः तम्भुङ्क्ते अनुभवतीत्यानन्दभुक् चेतः चैतन्यदीप्ताज्ञानवृत्तिः मुखं मुखमिवप्रधानं यस्य सचेतोमुखो जीवः प्राज्ञइत्यर्थः ॥ ( तदैक्षतेति )छां० अ० ६ खण्ड २ तत्सदाख्यं ब्रह्म ऐक्षत स्वशक्तिसंयोगादीक्षणं कृतवत् कामितवदित्यर्थः, आत्मन्याश्रितामायाशक्तिः कामनाकारेणविक्रियामापद्यतइत्यर्थः, नह्यविक्रियस्य चिदेकरसस्य मायामन्तरेण कामस्सम्भवति, यद्यप्यस्तीश्वरस्यमायाकल्पितःकामस्तर्हि कामित्वेनजीववत् नित्यतृप्तोनस्यादितिचेन्न, लीलाश्वासादिदृष्टान्तेन मीमांसायांपरिहृतत्वात्कामितार्थस्यक्वचिदपिविघाताभावादपिजीववैषम्यम्, अतएवसत्यकामःसत्यसंकल्प इत्यन्यत्राम्नातम्,कामनाप्रकारएव निर्दिश्यते वहुस्यांप्रभूतंभवेयम्,नन्वाकाशस्य घटादिपदार्थान्तरोपाधिकृतं वहुभवनंदृष्टम् अद्वितीयस्यतु कथंबहुतेत्याशङ्क्योच्यते प्रजायेय प्रकर्षेणपूर्वावस्थितात्स्वरूपादाधिक्येनोत्पद्येय,ननु विद्यमानःपितापुत्रमुत्पादयतिनतुस्वयमुत्पद्यते तथासत्यत्रापि जगदुत्पादकस्य ब्रह्मणःस्वोत्पत्यभावात्प्रजायेयेत्युक्तिरनुपपन्नेतिचेन्न, उत्पद्य

प्रजायेयेति, "सोकामयतबहुस्यांप्रजायेयेतीत्यादिश्रुतिरत्रमानं, ईक्षणंसंकल्पः ॥ अथेश्वरेच्छावशात्तमः प्रधानविक्षेपशक्तिसंवलिता प्रकृतिराकाशादिप्रपंचाकारेण परिणमते,उक्तंचेदं "विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तंजगत्सृजेदिति, प्रपंचेजाड्याधिक्यदर्शनात्तस्य तत्कार्य्यत्वं ॥ शिष्यउवाच हेभगवन् विशुद्धसत्वप्रधानमायोपहितस्येश्वरस्य कथं जीवोपाधितमःप्रधानप्रकृत्यधिष्ठातृत्वं सम्भवति ॥ गुरुरुवाच हेसौम्य जीवानामनेकत्वात्तत्तदावरणशक्तिभिरावृतत्वेनाल्पज्ञत्वपरिच्छिन्नत्वपराधीनत्वादि गुणयोगाच्च जगत्कारणप्रकृत्यधिष्ठातृत्वायोगादीश्वरस्यैकत्वविभुत्वसर्वज्ञत्वसर्वनियन्तृत्वादिगुणयोगान्मूलप्रकृतेर्गुणवैषम्येन भेदवत्वेपि स्वरूपतो भेदाभावात्तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन मायायास्तमःप्रधानप्रकृत्यभिन्नत्वाच्च तदधिष्ठातृत्वं सम्भवत्येव ॥ अन्यथानेकाल्पज्ञजीवाधिष्ठितप्रपंचस्यानेकत्वाद्यनेकदोषापत्तिः स्यात्, "यतोवाइमानिभूतानिजायन्ते येनजातानिजीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेतीत्येकेश्वरत्वप्रतिपादकश्रुत्यादिविरोधश्चस्यात् ॥ अत्र जगतोब्रह्मणि लय

मानयोर्नामरूपयोर्ब्रह्मणोत्यन्तभेदाभावात्; यथासमुद्रादाविर्भवन्तस्तरङ्गादयोः नात्यन्तंभिन्नाः तथाब्रह्मशक्तौमायायामवस्थितेपूर्वमनभिव्यक्तेनामरूपे पश्चादभिव्यज्यमानेसति ब्रह्मणःसद्रूपतामपरित्यज्यैवस्वयमपि सद्रूपत्वेनभासेते एतदेवाभिप्रेत्यवाजसनेयिनआमनन्ति "तद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेवव्याक्रियतेति, तस्माद्ब्रह्मणएव माययाजगद्रूपेण प्रतिभासात् प्रजायेयेत्युक्तिरुपपद्यते (सोकामयतेति)तैत्तिरीयब्रह्मवल्लीषष्ठानुवाकस्थम्, स ब्रह्मपुच्छंप्रतिष्ठेत्यत्रनिर्दिष्टो योयं ब्रह्मपदार्थः स आत्मा अकामयत स्वशक्तिसंयोगात्कामनां कृतवान् शेषंपूर्ववत् ॥ (विक्षेपशक्तिरिति ) सरस्वतीरहस्योपनिषत्स्थम्, लिङ्गम् लिङ्गशरीरम् ब्रह्माण्डम् चतुर्दशभुवनात्मकम् ( यतोवाइति ) तैत्तिरीयभृगुवल्लीप्रथमानुवाकस्थम्, इमान्याकाशादीनि पंचमहाभूतानि भौतिकदेहोपेता हिरण्यगर्भादिस्तम्बान्ताः सर्वे प्राणिनश्च यतोवस्तुनो जायन्ते वैशब्दः "सइमांल्लोकानसृजतेत्यादिश्रुत्यन्तरप्रसिद्धिद्योतनार्थः, उत्पन्नानिच भूतानि येन वस्तुना जीवन्ति स्थितिंलभन्ते प्रयन्ति नाशंप्रतिपद्यमानानि भूतानि यद्वस्त्वभिसंविशन्ति साकल्येन प्रविशन्ति यथा फेन

श्रवणादुपादाने एव कार्यस्य लयदर्शनादभिन्ननिमित्तोपादानत्व मीश्वरस्यैवेतिबोध्यम् ॥ शिष्यउवाच हेभगवन्घटादिकार्ये मृदा दीनामुपादानत्वं कुलालादीनां निमित्तत्वंच दृष्टं तद्विरुद्धे कथमे कस्यैव निमित्तोपादानत्वे सङ्गच्छेयाताम् ॥ गुरुरुवाच हेसोम्य ना यंनियमः सुखादिकार्येप्रत्येकस्यैवात्मनो निमित्तत्वोपादानत्वद र्शनादीश्वरस्योर्णनाभिवत्स्वाधिष्ठितप्रकृतिविकारंप्रति सन्निधिस त्तामात्रेण निमित्तत्वं, तच्च कर्तृत्वरूपं, कर्तृत्वंच सोपादानगोचरा परोक्षज्ञानचिकीर्षाकृतिमत्वं, एतच्च जीवादृष्टवशाज्जायमानमाया वृत्त्युपहितचिच्छक्तिद्वारकं, उपादानत्वंतु विवर्त्ताधिष्ठानत्वं,तच्च ज गदाकारेणपरिणममानमायाधिष्ठानत्वरूपं, "चिद्विवर्त्तंजगतोस्य कारणमिति वराहोपनिषद्वचनात्, निरवयवस्य परिणामित्वायो गाच्च, विवर्त्तोनाम कारणविषमसत्ताकोन्यथाभावः, परिणामस्तु कारणसमसत्ताकोन्यथाभाव इति तयोर्भेदोद्रष्टव्यः, "यथोर्णना भिः सृजतेगृह्णतेच यथापृथिव्यामोषधयःसम्भन्ति यथासतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीहाविश्वं, "तदात्मानꣳ स्वयमकुरुत, सू० आत्मनिचैवंविचित्राश्चहि, इत्यादिश्रुतिसूत्र

तरङ्गबुद्बुदादीनां उत्पत्तिस्थितिलयाः समुद्रे भवंति तद्वत् जगदुत्पत्तिस्थितिलयका रणं वस्तु विचारय तदेव वस्तु त्वया पृष्टं ब्रह्म इतिशब्दः उत्तरसमाप्त्यर्थः, प्र यन्तीति इण् गतावित्यतः शत्रन्तात्क्लीबाज्जसिरूपम् इणोयण्(विचार०)( चिद्वि वर्त्तेति ) स्पष्टम् ॥ यथोर्णनाभिरिति ) प्रथममुण्डकस्थम्, परनिरपेक्षस्वाभिन्न स्वभिन्नकार्य्यसृष्टिसंहारयोर्दृष्टान्ताः यथोर्णनाभिरित्यादयः पृथिवीपुरुषान्तास्त्र यः, ऊर्णनाभिः लूताकीटः गृह्णते उपसंहरति ओषधयःस्वाभिन्नाः सतोजीवतः केशलोमानि विजातीयानि ॥ ( नारायणी ) ( तदात्मानमिति ) तैत्तिरीयब्रह्म वल्लीसप्तमानुवाकस्थम्, तद्ब्रह्मात्मानं सच्चिदानन्दैकरसस्वरूपं स्वयं कर्त्रन्तरनैरपे क्ष्येणाकुरुत जगदाकारेण कृतवत् नखलु जगदुपादानं मृत्तिकास्थानीयं कुलाल स्थानीयं निमित्तंच किंचिद्ब्रह्मव्यतिरिक्तमस्ति किन्तु ब्रह्मैवोभयस्थानीयं ॥ ( वि द्यारण्यदीपिका ) ( आत्मनिचैवमिति ) ब्रह्मसूत्रे अ० २ पा० १ सू २८ हि यस्माद्धेतोरेकस्मिन्नात्मनि स्वप्नदृशि निरवयवे विचित्राः सृष्टयः श्रूयन्ते " नतत्र रथा नरथयोगा नपन्थानो भवन्त्यथरथान्रथयोगान् पथः सृजतइत्यादौ स्वप्नेरथा दीनामभावे कथं तदुपलब्धिरित्याशंक्योक्तं श्रुतावथेत्यादि, सूत्रे चशब्देन माया

जातमत्रमानं, यथा चैतन्यसन्निधानव्यतिरेकेण जडदेहादेर्मृतश रीरवत्स्वातन्त्र्येण तन्त्वादिकार्यजनकत्वासंभवात्तदधिष्ठातृचैतन्य स्य सन्निधिसत्तामात्रेण स्वोपाधिशरीरविकाररूपतन्त्वादिकार्यं प्रति निमित्तत्वं, यथाच निरवयवात्मनस्तन्त्वादिरूपेण परिण मायोगात्तन्त्वादिरूपेण परिणममानशरीराधिष्ठानत्वमुपादानत्वं, तथेश्वरस्यापीति श्रुतिसूत्राशयः ॥ शिष्यउवाच ॥ हेभगव न् श्रुत्यन्तरेषु क्वचिदग्न्यादिका सृष्टिःश्रूयते, क्वचिदबादिका, क्व चित्तुप्राणादिकेत्यादिप्रकारेण सृष्टिक्रमवैषम्ये श्रूयमाणे कथम विद्याकाशादिप्रपंचरूपेण परिणमतेत्युक्तम् ॥ गुरुरुवाच हेसो म्याग्न्यादिसृष्टीनामवकाशात्मकाकाशसापेक्षत्वात्तदादिक्रमस्यैव मुख्यत्वं, अन्यानिसृष्टिवाक्यान्याकाशं वायुंच सृष्ट्वा तेजःसृष्टवानि त्यादिप्रकारेण योजयितव्यानि, आकाशदिक्रमस्तुतैत्तिरीये "आ त्मन आकाशस्सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अ द्भ्यः पृथिवी पृथिव्याओषधयः ओषधीभ्योन्नं अन्नात्पुरुष इतिश्रू यते, बृहदारण्यकेतु "अन्नाद्रेतः रेतसःपुरुष इति, श्रुत्यर्थस्तु विक्षेपशक्तिसंवलिततमःप्रधानप्रकृत्युपहितात्मनः सकाशात्स्वो पादानगतसत्वादिगुणैः सहाकाश उत्पन्नः, एवमग्रेपि कार्ये कार णगुणानुवृत्तिर्द्रष्टव्या ॥ आकाशोपहितादात्मनो वायु स्तदुपहि तात्तस्मादग्नि स्तदुपहितात्तस्मादाप स्तदुपहितात्तस्मात्पृथिव्युत्प न्नेत्येवमग्रेपि बोध्यम् ॥ एतान्येवापंचीकृतपंचमहाभूतानि तन्मा त्राणि सूक्ष्माणिचेत्युच्यन्ते ॥ एभ्यो भूतेभ्यो जीवोपाधिभूतान्ये कोनविंशत्यवयवानि सूक्ष्मशरीराणि पंचीकृतपंचमहाभूतानि चो त्पद्यन्ते,तेत्ववयवाः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पंचज्ञानेन्द्रि

विदृष्टांतं समुचिनोति यथा लोके मायाविस्वरूपानुपमर्देनैव हस्त्यश्वादीविचित्राः सृष्टयो दृश्यन्ते एवं ब्रह्मण्यपि विविधसृष्टिरित्यर्थः ॥ क्वचिच्छांदोग्यषष्ठे, क्वचित् ऐतरेयोपनिषदि, क्वचित् मुण्डकोपनिषदि, ( पृथिव्याओषधयइति ) पृथिव्या उक्ताया:ओषधयः फलपाकान्ताः ओषधीभ्यः उक्ताभ्य अन्नमदनीयं प्रसिद्धम् अन्नाद्रेतोरूपपरिणतात्पुरुषः शिरःपाण्याद्याकृतिमान्सम्भूत इतिपूर्वेणसम्बन्धः,

याणि मनोबुद्धिरहंकाराश्चित्तंचेत्यन्तःकरणचतुष्टयं, वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि, प्राणापानव्यानोदानसमानाख्याःपंचप्राणाश्चेत्यवमेकोनविंशतिसंख्याका भवन्ति,तत्राकाशस्य सात्विकांशाच्छ्रोत्रेन्द्रियं, वायोः सात्विकांशात्त्वगिन्द्रियं, अग्नेः सात्विकांशाच्चक्षुरिन्द्रियं, जलस्य सात्विकांशाज्जिव्हेन्द्रियं,पृथिव्याः सात्विकांशाद्घ्राणेन्द्रियमुत्पन्नं,एतेभ्य एवाकाशादिसात्विकांशेभ्यो मिलितेभ्यो मनोबुद्ध्यहंकारचित्तात्मकमन्तःकरणमुत्पन्नं, अन्तःकरणस्यैकत्वेपि संशयात्मिकावृत्तिर्मनो निश्चयात्मिका वृत्तिर्बुद्धिः गर्वात्मिका वृत्तिरहंकारः स्मरणात्मिका वृत्तिश्चित्तमिति तदवान्तरभेदो द्रष्टव्यः, शारीरकोपनिषदि "अथातःपृथिव्यादिमहाभूतानां समवायं शरीरं यत्कठिनं सापृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजो यत्सञ्चरति सवायुर्यत्सुषिरं तदाकाशं श्रोत्रादीनि ज्ञानेन्द्रियाणि श्रोत्रमाकाशे वायौत्वगग्नौचक्षुरप्सुजिव्हा पृथिव्यांघ्राणमिति,एवमिन्द्रियाणां यथाक्रमेणशब्दस्पर्शरूपरसगन्धाश्चैते विषयाः पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः, वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि, तेषां क्रमेणवचनादानगमनविसर्गानन्दाश्चैतेविषयाः, पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः, मनोबुद्धिरहंकारश्चित्तमित्यन्तःकरणचतुष्टयं, तेषांक्रमेण सङ्कल्पविकल्पाध्यवसायाभिमानावधारणास्वरूपाश्चैते विषयाः, मनस्थानंगलान्तं,बुद्धेर्वदनं, अहंकारस्यहृदयं, चित्तस्यनाभिरिति, अस्थिचर्मनाडीरोममांसाश्चेतिपृथिव्यंशाः, मूत्रश्लेष्मरक्तशुक्रस्वेदाअबंशाः, क्षुत्तृष्णालस्यमोहमैथुनान्यग्नेः, प्रचारणविलेखनस्थूलाक्ष्युन्मेषनिमेषादिवायोः, कामक्रोधलोभमोहभयान्याकाशस्य, शब्दस्पर्शरूपरसगंधाःपृथिवीगुणाः, शब्दस्पर्शरूपरसाश्चापांगु

(अथातइति)समवायम् समवायः समूहःक्लीवत्वंछान्दसं,(आकाशेइति)अन्तर्भूतमितिशेषः, एवमग्रेपि ( क्रमेणेति ) विपरीतक्रमेणेत्यर्थः, पायुर्गुदं उपस्थो लिंगं विसर्गस्त्यागः मनसः संकल्पविकल्पौ विषयः अवधारणा स्मरणं मांसस्यपुंस्त्वछान्दसं मोहोऽविवेकः अग्रेतु मोहोमूर्च्छा स्थूलत्वमक्षिविशेषणमिन्द्रियव्यापा

णाः, शब्दस्पर्शरूपाण्यग्निगुणाः, शब्दस्पर्शाविति वायुगुणौ, शब्दएकआकाशस्येत्युक्तं ॥ पैङ्गलोपनिषदि "भूतसत्वतुर्यभागेन ज्ञानेन्द्रियमसृजत्, भूतसत्वांशभागत्रयसमष्टित अंतःकरणमसृजत्, अथापंचीकृतमहाभूतरजोंशभागत्रयसमष्टितःप्राणमसृजत्, आकाशादिरजोगुणतुर्यभागेन कर्मेन्द्रियमसृजत्, इत्युक्तं ॥ श्रोत्रादिचित्तान्तानामेषां प्रकाशात्मकत्वात् सत्वप्रधानभूतकार्यत्वमितिध्येयम् ॥ तथारजोंशादाकाशाद्वागिन्द्रियं, रजोंशाद्वायोःपाणीन्द्रियं, रजोंशादग्नेःपादेन्द्रियं, रजोंशाज्जलात्पय्विन्द्रियं, रजोगुणप्रधानायाःपृथिव्याःसकाशादुपस्थेन्द्रियमुत्पन्नं, एतेभ्य एवरजोगुणप्रधानेभ्यो मिलितेभ्यः पञ्चप्राणाश्चोत्पन्नाः, सदोर्ध्वगमनवान्वायुःप्राणःनासाग्रस्थायी, "अथयोयमूर्ध्वमुत्क्रामति एषवाव स प्राण इतिमैत्रायणीयोपनिषद्ववचनात्, "वायुःप्राणोभूत्वा नासिके प्राविशदित्यैतरेयोपनिषच्छ्रुतेश्च,अवाग्गमनवान्वायुरपानः नाभिमारभ्यपायुपर्य्यन्तस्थायी, "अथयोयमवांञ्चंसंक्रामति एषवाव सोपानइतिमैत्रायणीयोपनिच्छ्रुतेः, "मृत्युरपानोभूत्वा नाभिंप्राविशदित्यैतरेयोपनिषद्वचनाच्च, विष्वग्गमनवान्वायुर्व्यानः सर्वशरीरस्थायी, "येनैताःशिराअनुव्याप्ता एषवावसव्यानइतिमैत्रायणीयश्रुतेः, देहत्यागकाले ऊर्ध्वगमनवान्वायुरुदानःकण्ठस्थायी, "अथैकयोर्ध्वउदानःपुण्येनपुण्यंलोकंनयति पापेनपापंउभाभ्यामेवमनुष्य

त्ये उन्मेषोविकासः ॥ ( भूतसत्वेति ) भूतानामपंचीकृतभूतानां यत्सत्वं कश्चित्सत्वांशस्तस्य चतुरोभागान्कृत्वा एकेन ज्ञानेन्द्रियाणि त्रिभिरन्तःकरणमसृजत् तथा तेषामेव कस्यचिद्रजोंशस्य चतुरोभागान्कृत्वैकेन कर्मेन्द्रियं त्रिभिःप्राणमसृजदित्यर्थः ॥ ( अथयोयमिति ) योयं वायुरूर्ध्वमुत्क्रामति नाभेरूर्ध्वंशिरःपर्यन्तमुच्चैःक्रामति संचरति मुखनासिकयोरुपलभ्यमानः एषवाव एषएव सप्राणःप्राणसंज्ञो वायुभेद इत्यर्थः ॥ ( वायुःप्राणइति ) स्पष्टार्थम् ॥ ( अथयोयमवांचमिति ) नाभेरधःपायुपर्य्यन्तं देशं संक्रामति संचरति एषवाव सोपान इति पूर्ववद्योजना ॥ ( मृत्युरपानइति ) स्पष्टाथम् ॥ ( येनैताश्शिराइति ) शिरा नाड्यः ॥ ( अथैकयेति ) प्रश्न० ३ ख० ७ एकया हृदयाश्रितैकशतसंख्यानाडीषुमध्ये एकया सुषुम्णाख्यया नाड्या ऊर्ध्वः ऊर्ध्वचारी उदाननामावायुःपुण्येन शास्त्रीयेणकर्मणा पुण्यंलोकं देवादिस्थानलक्षणं नयतिप्रापयति पापेननिषिद्धेनकर्मणा पापमशुभकर्म

लोकमिति प्रश्नोपनिषद्वचनात्, अशितपीतान्नरसादिसमीकरणवा न्वायुः समानः नाभिस्थायी, "अथयोयंस्थविष्ठमन्नधातुमपाने स्थापयति अणिष्ठंचाङ्गेङ्गेसमंनयत्येषवावसमानः, इतिमैत्रायण्युप निषच्छ्रुतेः, प्राणस्यैकत्वेपिवृत्तिभेदात्पंचविधत्वं, एषांवागादीनां क्रियात्मकत्वाद्रजोगुणप्रकृतिकार्यत्वं चेत्यवगन्तव्यम् ॥ नागःकूर्मश्चकृकलोदेवदत्तोधनंजय इत्यन्येप्युद्गिरणोन्मीलनक्षुद्विजृम्भण पोषणकारकावायवःसन्ति तेषामुपवायूनामत्रैवान्तर्भावश्चेति वद न्ति ॥ इदमेवलिङ्गशरीरमित्युच्यते ॥ एवंच यथास्यसुषुप्तौ संस्कारात्मना विद्यमानस्यैवावस्थान्तरे प्रादुर्भावस्तथा प्रलयकाले संस्कारात्मना तत्तत्कारणेन सहाविद्यायां विद्यमानस्यैव सृष्टौ प्राणिकर्माधीनेश्वरेच्छावशात्प्रादुर्भावोऽनादित्वंचेति सिद्धम्, अन्यथा कृतहान्यकृताभ्यागमप्रसङ्गः स्यात्, तत्कर्तुरीश्वरस्या स्मदादिवद्वैषम्यनैर्घृण्यादिदोषप्रसङ्गेनेश्वरत्वमपिनस्यात्, अतोस्य लिङ्गशरीरादेरनादित्वमनेकत्वंचावश्यमभ्युपेयम् ॥ कोशाश्च त्रयो विज्ञानमयादयोऽत्रैवसंति, तदुक्तं पैङ्गलोपनिषदि "कर्मेन्द्रियैस्सहप्राणादिपंचकं प्राणमयकोशः, ज्ञानेन्द्रियैस्सहमनोमनोमय कोशः, ज्ञानेन्द्रियैस्सहबुद्धिर्विज्ञानमयकोशः, तत्कोशत्रयं लिङ्ग शरीरमिति, तत्रज्ञानेन्द्रियैःसहिताबुद्धिर्विज्ञानमयकोशइत्युच्यते, बुद्धेस्सत्वप्रधानप्रकृतिकार्य्यत्वात्तादृशज्ञानेन्द्रियसाहित्येन प्रका शाधिक्याच्च विज्ञानमयत्वं, अतएवज्ञानशक्तिमत्वं, सत्वात्संजा यते ज्ञानमितिस्मृतिदर्शनाच्च, "विज्ञानंयज्ञंतनुते कर्म्माणितनुतेपिचेत्यादिश्रुत्या कर्तृरूपत्वंच कोशवदात्मावारकत्वात्कोशत्वम् ॥

फलंलोकं नयति उभाभ्यामपुण्यपापाभ्यामेव नतुकेवलेन पापेन पुण्येन वा मनुष्यलोकं मानवं शरीरं सुखदुःखफलं नयतीत्यनुषंगः ॥ ( अथयोयंस्थविष्ठमिति ) योयं वायुः स्थविष्ठं स्थूलतममन्नस्य भुक्तस्य धातुं पुरीषाख्यमसारभागं अपाने अपानवायुसंचारस्थाने गुदे नयति, तथाऽणिष्ठमणुतममन्नस्य धातुंसारभागंदेहग मनस्थितिहेतुं अंगे अंगे शरीरस्यप्रत्यगं नयति एषवाव समानः, अत्रान्नस्ययोऽणुतरो भागो यश्चमध्यमस्तदुभयमेकीकृत्याऽणिष्ठशब्देनोक्तमितिकल्प्यं, एतेन न छांदोग्य विरोधः ॥(कर्मेन्द्रियैरिति)स्पष्टार्थः ( विज्ञानंयज्ञमिति) तैत्तिरीयब्रह्मवल्लीपञ्चमानु

तथाज्ञानेन्द्रियैःसहितंमनो मनोमयकोशइत्युच्यते, यद्यप्यन्तः करणस्य सत्वप्रकृतिकत्वात्तद्वृत्तेरपि सत्वकार्यत्वं तथापिमनो वृत्तेः संकल्पविकल्पात्मकतया सत्वोपहितरजोविकारेच्छारूपत्वंबुध्यपेक्षयाजाड्याधिक्यंच गम्यते, ततस्तद्योगात्तस्य तन्मयत्वं, अतएवेच्छाशक्तिमत्वं, करणरूपत्वंच, कोशवदात्मावारकत्वात्कोशत्वंच ॥ तथाकर्मेन्द्रियैःसहितं प्राणपंचकं प्राणमयकोशइत्युच्यते, अस्यरजोविकारात्मकप्राणप्रचुरत्वात्प्राणमयत्वं, अतएव क्रियाशक्तिमत्वं,कर्म्मरूपत्वंच, कोशवदाच्छादकत्वात्कोशत्वंचेत्यवगन्तव्यम् ॥ कोशत्रयात्मकसूक्ष्मशरीरावच्छिन्नस्तैजसः, तेजोमयान्तःकरणोपहितत्वादस्यतैजसत्वं, स्वोपाधेरनेकत्वात्स्वस्याप्यनेकत्वं, अयंतुस्वप्नावस्थायामन्तः करणवृत्युपाधिभेदाद्भिन्नाभिःस्वरूपभूतचिच्छक्तिभिरन्तः करणपरिणामात्मकान्वासनाजनितान् शब्दादिसूक्ष्मविषयाननुभवति ॥ "स्वप्नस्थानोन्तः प्रज्ञः सप्तांगएकोनविंशतिमुखः प्रविविक्तभुक् तैजसः, "सहिस्वप्नोभूत्वेमंलोकमतिक्रामतीत्यादिश्रुतिरत्रमानम् ॥ अथोक्तसूक्ष्मभु

वाक्यस्थम्, विज्ञानं कर्तृत्वशक्तियुक्तो विज्ञानमयकोशः व्यावहारिकजीवत्वेनव्यवहृतःयज्ञं ज्योतिष्टोमादिकं तनुते अनुतिष्ठति एतदीयमनुष्ठानं तत्साक्षिणि चिदात्मनि भ्रान्त्या परिकल्प्यते अपिच कर्माणि कृषिवाणिज्यादिलौकिककर्म्माण्यपि तनुते, ( स्वप्नस्थानइति ) माण्डूक्यस्थम्,स्वप्नोजागरितवासनाजन्यःस्थानंद्रष्टुर्मम ताभिमानविषयभूतमस्येदृशः, अन्तर्मानसवासनास्वेव प्रज्ञाबुद्धिर्यस्यसः,सप्तसङ्ख्यानि मूर्द्धा १ चक्षुः २ प्राणः ३ शरीरमध्यभागः ४ वस्तिः ५ पादौ ६ आस्यम ७ इत्येतान्यङ्गानि यस्यसः, प्राणज्ञानेन्द्रियकर्मेन्द्रियपंचकानि अन्तःकरणचतुष्टयं चेत्येकोनविंशतिसंख्यानि मुखान्युपलब्धौ करणानि यस्यसः,प्रविविक्तं सूक्ष्ममस्थूलमितियावत् भुङ्क्ते अनुभवतीतिप्रविविक्तभुक्, तेजोन्तःकरणं कर्तृकरणकार्यभावेनपरिणतं स्थूलशरीरादिहीनं तस्यायं सतैजसः अन्तःकरणस्वामीत्यर्थः ॥ ( सहिस्वप्नइति ) बृ० अ० ४ ब्रा० ३ हि यस्मात्स आत्मा स्वप्नोभूत्वा स्वप्नाकारपरिणतधीवृत्त्यवभासकत्वेन तदाकारोभूत्वा इमंलोकं जागरितव्यवहारलक्षणं कार्य करण संघातात्मक मतिक्रामति तदभिमानं त्यजतीतियावत्, ( मि० )

तानां पंचानां पंचीकरणात्पचस्थूलभूतानिजायन्ते, पंचीकरणप्रकारस्त्वाकाशादिभूतपंचकं पृथक्पृथक् समंद्विधाविभज्यपुनरेकैकस्यैकैकमर्द्धांशं चतुर्धाविभज्य तेषांस्वस्वेतरद्वितीयांशेषु योजनात्तानि भूतान्यर्द्धेन स्वांशेनाऽर्द्धेनेतरांशेनच पंचीकृतानि भवन्ति ॥ उक्तंचेदंभगवताभाष्यकृता द्विधाविधायचैकैकं चतुर्धा प्रथमंपुनः ॥ स्वस्वेतरद्वितीयांशैर्योजनात्पंचपंचत इति, तन्मात्राणां व्यवहारायोग्यत्वात्तेषु तत्संपादनमेव पंचीकरणस्य प्रयोजनमितिध्येयम् ॥ शिष्यउवाच हेभगवन् "तासांत्रिवृत्तं त्रिवृतमेकैकांकरवाणीत्यत्र त्रिवित्करणमेव श्रूयते नतु पंचीकरणं तस्मात्पंचीकरणे श्रुतिप्रमाणाभावात्कथमस्योपादेयत्वं भवेत् ॥ गुरुरुवाच हेसोम्य सैवश्रुतिरत्रमानं तस्यास्त्रिवृत्करणश्रुतेः पंचीकरणोपलक्षणार्थत्वात्, यथा तत्रैव श्रुत्यन्तरविरोधपरिहाराय सृष्टिपरिपूरणायच भूतत्रयसृष्टिराकाशादिभूतद्वयोपलक्षणपरेत्यभ्युपगम्यते तथा "पंचीकृतानन्तभवप्रपंचं, "स्रष्टुकामो जगद्योनिस्तमोगुणमधिष्ठाय सूक्ष्मतन्मात्राणिभूतानि स्थूलीकर्तुं सोकामयतसृष्टेःपरिमितानि भूतान्येकमेकं द्विधाविधाय पुनश्चतुर्धाकृत्वा स्वस्वेतरद्वितीयांशैः पंचपंचधासंयोज्य पंचीकृतभूतैरनंतकोटिब्रह्माण्डानि तत्तदंडोचितचतुर्दशभुवनानि तत्तद्भुवनोचित गोलकस्थूलशरीराण्यसृजदित्यादि नारदपरिव्राजकपैङ्गलोपनिषद्वचनाविरोधपरिहारायव्यवहारोपपत्तयेच त्रिवृत्करणमपि पंचीकरणोपलक्षणार्थमित्यभ्युपगंतव्यं, अन्यथा व्यवहारानुपपत्तिःस्यात्तस्मात्तस्योपादेयत्वासिद्धिः,पृथिव्यादीनां भेदव्यवहारस्तुस्वस्वांशाधिक्येनेतिद्रष्टव्यम्, उक्तंचेदंभगवतासूत्रकृता सू० वैशेष्यात्तुतद्वाद

( तासामिति ) छां० अ० ६ ख० ३ तासां तिसृणां देवतानां तेजोजलपृथिवीरूपाणां मध्ये एकैकां देवतां त्रिवृतं त्रिवृतं गुणप्रधानभावेन त्रिरूपां त्रिरूपां करवाणि, इत्यस्य सेयंदेवतैक्षततेतिपूर्वेणसम्बन्धः ॥ ( पंचीकृतेति ) नारदपरिव्राजकचरमोपदेशस्थम्, पंचीकृतानामनेकेषमाकाशादीनां भवप्रपंचोजन्मपरम्परा यस्मात्तमितीश्वरविशेषणम् ॥ ( स्रष्टुकामइति ) पैङ्गलोपनिषत्स्थम्, तमोगुणं तत्प्रधानां प्रकृतिम्, स्पष्टमन्यत्, ॥ ( वैशेष्यादिति ) ब्रह्मसू०

स्तद्वाद इति, अथ पंचीकरणानन्तरमाकाशे सूक्ष्मरूपेण विद्यमानस्य शब्दगुणस्य स्पष्टोपलब्धिर्भवति, तथावायौ शब्दस्पर्शयोः, वह्नौ शब्दस्पर्शरूपाणां, जले शब्दस्पर्शरूपरसानां, पृथिव्यां शब्दस्पर्शरूपरसगन्धानां स्पष्टोपलब्धिर्भवति ॥ एभ्योभूतेभ्यश्चतुर्दशभुवनात्मकं ब्रह्माण्डं तदन्तर्गतजरायुजाण्डजस्वेदजोद्भिज्जानि चतुर्विधस्थूलशरीराणि तद्रुचितान्नपानादीनिचोत्पद्यन्ते, जरायुभ्योजातानि जरायुजानि, मनुष्यपश्वादीनि ॥ अण्डेभ्योजातान्यण्डजानि पक्षिपन्नगादीनि ॥ स्वेदेभ्योजातानिस्वेदजानि यूकामशकादीनि ॥ भूमिमुद्भिद्यजातान्युद्भिज्जानि वृक्षगुल्मादीनीति तेषांभेदोद्रष्टव्यः ॥ एतत्स्थूलशरीरावच्छिन्नो विश्व इत्युच्यते, लिङ्गशरीराभिमानमपरित्यज्य सर्वाणिस्थूलशरीराणि प्रविश्य तत्रपृथक्पृथक् अहमित्यभिमानवत्वादस्यविश्वत्वं, स्वोपाधेरनेकत्वात्स्वस्याप्यनेकत्वं, एतदुपाधेरन्नविकारत्वादात्मा च्छादकत्वाच्चान्नमयकोशत्वं च द्रष्टव्यम् ॥ उक्तंचेदं "अन्नरसेनैवभूत्वाऽन्नरसेनाभिवृद्धिंप्राप्यान्नरसमयपृथिव्यां यद्विलीयते सोन्नमयकोशः तदेवस्थूलशरीरमिति, सचविश्वो जाग्रदवस्थायां दिग्वातार्कवरुणाश्व्यग्नीन्द्रोपेन्द्रयमप्रजापति चंद्रचतुर्मुखशंकराच्युतैः क्रमेणानुगृहीतश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक् पाणिपादपायूपस्थमनोबुद्ध्यहङ्कारचित्ताख्येन्द्रियवृत्त्युपाधिभेदैरन्यैः कामादिवृत्त्युपाधिभेदैश्चभिन्नाभिः स्वरूपभूताचिच्छक्तिभिः शब्दस्पर्शरूपरसगन्धवचनादानगमनविसर्गानंदसंकल्प विकल्पनिश्चयगर्वस्मरण।

अ॰ २ पा॰ ४ सू॰ २२ पंचीकरणे एकैकस्मिन्पंचानामपि सत्वेनेयंपृथिवी इमाआपः इदंतेजः इत्यादिवृद्धव्यवहारः कथं सङ्गच्छत इत्याशंकानिरासार्थमिदं सूत्रम्; तुशब्द उक्ताशंकानिरासार्थः, सर्वेषां पृथिव्यादीनां पंचीकृतत्वादाविशेषेपि वैशेष्यात्स्वस्वभागाधिक्यात् तद्वादः इयंपृथिवीत्यादिव्यवहारो भवतीत्यर्थः ॥ ( अन्नरसेनेति ) पैङ्गलोपनिषत्स्थम्, अन्नस्यरसो रेतोरूपद्रवतामापन्नो भागस्तेन भूत्वोत्पद्य रस्यते आस्वाद्यते सा।वितिरसः घञर्थेकविधानमितिकः अन्नरूपोयोरसः आस्वाद्यपदार्थस्तेन भुक्तेन अन्नरसेन वृद्धिमुपचयं प्राप्य अन्नरसाः प्रचुरायस्यां सा अन्नरसमयी साचासौ पृथिवीच तस्यांयद्विलीयतेतद्व्यवहारास्पदं भवति

ख्यानन्यांश्च कामादीन्स्थूलविषयाननुभवति, "जागरितस्थानो बहिःप्रज्ञःसप्ताङ्गएकोनविंशतिमुखः स्थूलभुग्वैश्वानर इत्यादिश्रुतिरत्रमानं ॥ तथाचाज्ञानतत्कार्य्यदेहद्वयसंबन्धमन्तरा आत्मनि कर्तृत्वाद्यदर्शनात्तेषां प्रातीतिकत्वमेवेति सिद्धम् ॥ शिष्यउवाच हेभगवन्स्वस्वरूपावस्थानात्मकमोक्षप्रतिबन्धकस्य समूलस्य प्रातीतिकस्य कर्तृत्वादेःकथमात्यन्तिकीनिवृत्तिर्भवेत् ॥ गुरुरुवाच हे सोम्य प्रथमंतावत्सच्चिदानन्दस्वरूपमात्मानं श्रुतियुक्त्यादिभिराचार्य्यमुखनिर्गताभिः सम्यग्विचार्य्य रज्जुविवर्त्तस्य रज्जुमात्रत्ववच्चैतन्यविवर्त्तस्य सोपादानस्याहंकारादिप्रपंचस्य चैतन्यमात्रत्वमिति निश्चित्य प्रातीतिकस्य स्थूलप्रपंचस्य सूक्ष्मे सूक्ष्मस्य कारणे तस्य मूलाज्ञानस्य सर्वसाक्षिणि निर्विकारे स्वयंप्रकाशरूपे परमात्मनि लयंविभाव्य सर्वोपाधिविनिर्मुक्तं नित्यशुद्धबुद्धमुक्तस्वरूपमात्मानमहंब्रह्मास्मीति भावयेत् तथासति योगजसंस्कारवतः पूर्णाधिकारिणस्तथा चिरकालभावनाभावितोन्तःकरणेऽज्ञानोपहितप्रत्यगभिन्नब्रह्मविषयिणी काचिदखण्डाकारा वृत्तिरुदेति ततस्तदारूढा परमात्मरूपा चिच्छक्तिः प्रत्यगभिन्नब्रह्माऽऽवारकं मूलाज्ञानं विनाशयति तदानीमेव तन्मूलसकलानात्मप्रपंचविलयो भवति तदन्तर्गतात्माभिव्यंजकाखण्डाकारवृत्तेर्मूलाज्ञानसत्वकार्य्यत्वात्तल्लयादेव तल्लयोपिभवति तद्वृत्तिविलयनेन तदुपहिता चिच्छक्तिर्घटनाशे घटाकाशइवनिर्विशेषचिदानन्दैकरसस्वरूपेणावतिष्ठते तदानीमनर्थनिवृत्तिरानन्दावाप्तिरूपामुक्तिर्भवति ॥ उक्तंचेदं अविद्यास्तमयो मोक्षः साचबन्धउदाहृत इति ॥ शिष्यउवाच हेभगवन्नहमज्ञ इति स्वात्मनि भासमानाज्ञानस्य स्वेनसाकं विरोधाभावाद्विरुद्धयोरेव तमःप्रकाशयोर्नाश्यनाशकभावोपलम्भात्कथमात्मरूपायाः चिच्छ

सोन्नमयकोशइत्यर्थः ॥ ( जागरितेति ) माण्डूक्यस्थम्; जागरितं स्थानं यस्य सः,बहीरूपादौ चक्षुरादिग्राह्ये प्रज्ञा बुद्धिर्यस्यसः,स्थूलान् शब्दादिविषयान् भुङ्क्ते अनुभवति सः,शेषं प्राग्व्याख्यातं ॥ ( अविद्यास्तमयइति ) अयंवार्त्तिकस्थः, अविद्याया अस्तमयः संस्कारादिकार्यरूपेणाप्यनवस्थानं मोक्ष उच्यते,साचाविद्या

क्तेस्तन्निवर्त्तकत्वं ॥ गुरुरुवाच हेसोम्य प्रकृष्टप्रकाशस्तूलपि एडइति भासमानतूलपिण्डेनसह सवितृकिरणानां तमःप्रकाशव द्विरोधाभावेपि सूर्य्यकान्तमण्यारूढानां तेषां तन्नाशकत्ववदख ण्डाकारवृत्त्यारूढचिच्छक्तेरज्ञाननाशकत्वमिति ध्येयं ॥ शिष्यउ वाच हेभगवन् "यतोवाचोनिवर्तन्ते अप्राप्यमनसासह, "य न्मनसानमनुते, "अन्यदेवतद्विदितादित्याद्याः श्रुतयो ब्रह्मणो मनोवागविषयत्वं ब्रुवन्ति तत्कथं तस्याखण्डाकारवृत्तिविषय त्वमभ्युपगम्यते ॥ गुरुरुवाच हेसोम्य "मनसैवेदमाप्तव्यं, "मनसैवानुद्रष्टव्यं, "दृश्यतेत्वग्र्यूयाबुध्या सूक्ष्मयासूक्ष्मदार्शी भिरित्याद्याः श्रुतयस्तस्य मनोवाग्विषयत्वं ब्रुवन्ति अतस्ता सां विरोधपरिहारायेयं व्यवस्था विधेया, तत्र या मनोवाग विषयत्वप्रतिपादनपराः श्रुतय स्तास्तत्वविचारादिसंस्काररहि तमनोवागविषयत्वं,शक्तिवृत्त्यविषयत्वं, शुद्धब्रह्मणो मनसोऽविष यत्वं, स्वस्यस्वविषयत्वाभावेन चिच्छक्त्यविषयत्वंवा, ब्रुवन्ति, या श्च"मनसैवेदमाप्तव्यमित्याद्यास्तास्तु विचारादिसंस्कृतमनोवाग्वि षयत्वं, लक्षणावृत्तिविषयत्वं, अज्ञानोपहितब्रह्मणोमनोविषयत्वं, अखण्डाकारवृत्तिविषयत्वंवा, ब्रुवन्तीति ॥ उक्तंचेदंफलव्याप्यत्व

वन्ध उदाहृत उक्तः ॥ ( यतोवाचइति ) तैत्तिरीयब्रह्मवल्लीस्थम्, वाचो वाचकाः शब्दाः ज्ञापकेन मनसासहाप्राप्य यतो ब्रह्मणःसकाशान्निवर्त्तन्ते, इत्यर्थः, "स त्यंज्ञानमितिलक्षितस्य ब्रह्मणो लक्षणयैव यच्छब्देनानुवाद इतिबोध्यम् ॥ ( य न्मनसेति ) केनोपनिषत्स्थम्, यदितिद्वितीयान्तं यद्ब्रह्म मनसान्तःकरणेन नम नुते नकोप्यधिगच्छतीत्यर्थः ॥ ( अन्यदेवेति ) केनोपनिषत्स्थम्,तद्ब्रह्म विदिता त्सर्वस्माद्ज्ञानविषयात् अन्यदेव पृथगेव नतु ज्ञानविषयइत्यर्थः ॥ ( मनसैवे दमिति) कठोपनिषच्चतुर्थवल्लीस्थम्, आचार्यागमसंस्कृतेन मनसैवेदंब्रह्म आप्तव्यं प्राप्तुंशक्यमित्यर्थः ॥ ( मनसेति ) बृ० अ० ४ ब्रा० ४ आचार्योपदेशा दनुपश्चात्तत्संस्कृतेन मनसैव ब्रह्म द्रष्टव्यम्, न साधनांतरेणेत्यर्थः ॥ ( मि० ) (दृश्यतइति)काठकतृतीयवल्लीस्थम्, अग्र्यया एकाग्रतयोपेतया संस्कृतया बुद्ध्या सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया सूक्ष्मदर्शिभिस्सूक्ष्मवस्तुद्रष्टुंशीलंयेषांते सूक्ष्म दर्शिनःतैः पण्डितैरात्मा दृश्यते तु अवधारणे दृश्यतएवेत्यर्थः ॥ ( फलव्या प्यत्वमिति ) विशिष्टशब्दादिप्रमाणबला त्तत्तद्विषयाकारधीसमुन्मेषाभिव्यक्त

मेवास्य शास्त्रकृद्भिर्निराकृतं ॥ ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्ति रपेक्ष्यत इति ॥ फलं वृत्त्यारूढा चिच्छक्तिः ॥ शिष्यउवाच हे भगवन्नहंब्रह्मास्मीति वृत्तिर्यथान्तःकरणजन्या तथाहंकर्त्तेत्याद्या वृत्तिरप्यन्तःकरणजन्या, अतस्तयोर्विशेषाभावाद्ब्रह्माकारवृत्त्यारूढचिच्छक्तेः कर्तृत्वादिवृत्तिबाधकत्ववत्कर्तृत्वादिवृत्त्यारूढचिच्छक्तेर्ब्रह्माकारवृत्तिबाधकत्वं किंनस्यात् ॥ गुरुरुवाच हेसोम्यान्तःकरणपरिणामत्वेन तयोस्तुल्यत्वेप्यहंब्रह्मास्मीति ब्रह्माकारवृत्तेः "तत्त्वमसीति निर्दोषागमप्रमाणजन्यत्वादहंकर्त्तेत्यादिकर्तृत्वादिवृत्तेस्त्वविवेकदोषदुष्टप्रमाणाभासजन्यत्वाच्च तयोर्वैलक्षण्यान्नकर्तृत्वादिवृत्त्यारूढचिच्छक्तेर्ब्रह्माकारवृत्तिबाधकत्वम् ॥ यथा दशमोनास्तीत्यविवेकजनिता बुद्धिर्दशमस्त्वमसीत्याप्तोपदेशवाक्यप्रमाणजनितया दशमोहमस्मीतिवृत्त्यारूढचिच्छक्त्या बाध्यते नत्वविवेकजनितया दशमोन्नास्तीति बुध्यारूढचिच्छक्त्या दशमोहमस्मीतिवृत्तिस्तद्वदिदि बोध्यम् ॥ तदुक्तंवराहोपनिषदि द्वितीयाध्याये "अज्ञानजन्यकर्तृत्वादिकारकोत्पन्नकर्मणा श्रुत्युत्पन्नात्मविज्ञानप्रदीपो बाध्यते कथमिति, कर्तृत्वादिवृत्तीनां प्रमाणाजन्यत्वमवोचाम ॥ शिष्यउवाच हेभगवन् शुक्तितत्त्वसाक्षात्कारात्तदज्ञाननिवृत्तावपि पुनस्तत्र समयांतरे रजतभ्रमोत्पत्तिवद्ब्रह्मसाक्षात्कारात्सकृन्निवृत्तमप्यज्ञानं पुनरुद्भविष्यति ततः कर्तृत्वादिकमपि भविष्य

त्वं वृत्तिव्याप्यत्वं, बाह्येन्द्रियसन्निकृष्टार्थाकारबाह्यधीपरिणामावच्छिन्नचिदंशकृतप्राकट्याश्रयत्वं फलव्याप्यत्वम्, अयंभावः अन्तःकरणं चक्षुरादीन्द्रियद्वारेण घटादिविषयदेशंप्राप्य तदाकारेण परिणमते सएवपरिणामोवृत्तिरुच्यते साच तदावारकमज्ञानं विनाशयति नतु तदाभासयति तस्या जडत्वात् तादृशवृत्तौप्रतिबिंबितं चैतन्यन्तु तत्प्रकाशयति इदंप्रकाशत्वमेव फलशब्देनोच्यते इत्थं जडभासनायप्रतिबिंबापेक्षास्ति ब्रह्माकारवृत्तिस्तुस्वेन ब्रह्मावारके अज्ञानेविनाशितेब्रह्मणः स्वयंप्रकाशत्वेन ननदर्थंप्रतिबिंबमपेक्षतइतिब्रह्मणो वृत्तिव्याप्यतैवनफलव्याप्यता, (अज्ञानजन्येति) आदिनाकर्मत्वकरणत्वसंप्रदानत्वापादानत्वाधिकरणत्वानि गृह्य

ति तथाच मुक्तेरनित्यत्वं स्यात् ॥ गुरुरुवाच हेसोम्य प्रमाणजन्य ज्ञानाग्निदग्धमज्ञानं पुनःकथमुद्भविष्यति, किं मृता दग्धाच भार्या पुनः प्रसवायोद्भविष्यति ॥ अज्ञानान्तरमुद्भविष्यतीतिचेत्किं निर्नि मित्तमुद्भविष्यति निमित्ताद्वा आद्येऽकारणकार्य्योत्पत्तिप्रसङ्गःस्या त्, द्वितीये किमात्मनो निमित्तत्वमुतानात्मनः नाद्यः निर्विशे षस्यासहायस्यात्मनः कर्तृत्वानुपपत्तेः, नद्वितीयः असतोऽनात्म नस्तन्निमित्तत्वायोगात्, शुक्तिकादौतु रजतादिविक्षेपोपादानांश स्यैवाज्ञानशक्तिभेदस्य तज्ज्ञानान्निवृत्तिर्भवति न सप्रपंचस्य मू लाज्ञानस्य, तादृशानन्तशक्तिमतस्तस्य विद्यमानत्वेन तद्वशात्तत्र पुनर्भ्रांत्युदयसंभव इति दृष्टान्तवैषम्यं बोध्यं ॥ अत्र प्रमाणभूताः श्रुतयः पूर्वमेवोदाहृताः, स्मृतयस्तु बीजान्यग्न्युपदग्धानि नरोह न्तियथापुनः ॥ ज्ञानदग्धैस्तथाक्लेशैर्नात्मासंवध्यतेपुनः ॥ यथाप र्वतमादीप्तं नाश्रयन्तिमृगाद्विजाः ॥ तद्वद्ब्रह्मविदोदोषा नाश्रयन्ते कदाचन॥ मन्त्रौषधिवलैर्यद्वज्जीर्य्यन्तेभक्षितंविषं ॥ तद्वत्सर्वाणिक र्म्माणि जीर्य्यन्तेज्ञानिनःक्षणादित्याद्या द्रष्टव्याः॥ तदेवमात्मन्यु पाधिसंवन्धमन्तरेण कर्तृत्वादिसंसारस्यानुपलम्भादुपाधिनांचा त्मनोन्यत्र स्वातन्त्र्येण सत्तास्फूर्त्योः प्रमाणाभावादाविद्यकत्वेस ति नित्यशुद्धबुद्धमुक्तपरिपूर्णं वेदवेदान्तवेद्यं सत्यज्ञानादिलक्षणं ब्रह्म त्वमेवेत्याचार्य्यादवगतात्मतत्वो मुमुक्षुरवस्थात्रयात्मकस्य दृश्यप्रपंचस्यापोहेन तत्साक्षितया तदधिष्ठानतयाचाव्यभिचरि तं चिदेकरसं ब्रह्माहमस्मीति स्वानुभवमापादयन्स्वस्वरूपावस्था नात्मिकां मोक्षलक्ष्मींप्राप्नोतीत्युपपादितं, तथेदानीं निरुपाधिकानि र्विशेषचिन्मात्रतया प्रदर्शितप्रत्यगभिन्नब्रह्मसाक्षात्कारपर्य्यन्तं श्रु त्युक्ततत्साधनानां श्रवणमनननिदिध्यासनयोगादीनामनुष्ठेयत्वा त्तान्यप्यत्र निरूप्यन्ते शृण्वेतत्सावधानेनमनसा,तत्र श्रवणंनाम

न्ते कारकपदंकारकधर्मपरं तेनोत्पन्नत्वंकर्माणितदाश्रयद्वारेण,(वीजानीति)क्लेशा अ विद्यास्मितारागद्वेषाभिनिवेशाः,( यथापर्वतमिति ) आदीप्तं वन्हिनेतिशेषः, अ यंश्लोकःमैत्रायण्युपनिषदि षष्ठप्रपाठकस्थैतदाकारश्रुत्यनुवादरूपः, (मन्त्रौषधीति)

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलं ॥ अर्थवादोपपत्तीच लिङ्गंता त्पर्य्यनिर्णय इत्युक्तैः ब्रह्मात्मैकत्वनिश्चायकैः षड्विधलिंगैरखिल निगमान्तवाक्यानां प्रत्यगभिन्ने ब्रह्मणि तात्पर्य्यावधारणम् ॥ मन नन्तु तात्पर्य्यनिश्चयपूर्वकं श्रुतार्थस्य प्रत्यगभिन्नब्रह्मणः श्रुत्यवि रुद्धयुक्तिभिरनुचिन्तनं ॥ विजातियानात्मप्रत्ययानन्तरितसजाती यप्रत्यगभिन्नपरमात्मप्रत्ययप्रवाहो निदिध्यासनं ॥ योगस्तु चि त्तवृत्तीनां निरिन्धनाग्निवत्स्वकारणे लयात्मको निरोधः, संप्रज्ञा तयोगस्यालक्ष्यत्वात्, लक्ष्यत्वेतु चित्तस्य रजस्तमोवृत्तिनिरोधः, सामान्यतश्चित्तवृत्तिनिरोध इत्युक्तौ संप्रज्ञातयोगे सात्विकवृत्तेर्वि द्यमानत्वेनाव्याप्तिर्भवेदतउक्तं रजस्तमइति ॥ शिष्यउवाच हेभ गवन् "आत्मा वा अरे द्रष्टव्य इत्यत्र श्रवणादीनां त्रयाणामेव ज्ञानसाधनत्वावगमात् सू० एतेनयोगः प्रत्युक्त इतिभगवता सू

स्पष्टोर्थः, ( उपक्रमेति ) प्रकरण प्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुप क्रमोपसंहाराख्यमेकंलिङ्गम्, यथाछांदोग्यषष्ठाध्यये प्रकरणप्रतिपाद्यस्याद्विती यवस्तुनः "सदेवसोम्येदमग्र आसीदेकमेवाद्वितीय मित्यादौ "ऐतदात्म्यमिदं सर्वमित्यन्तेच प्रतिपादनं ॥ १ ॥ प्रकरणप्रतिपाद्यस्य वस्तुनस्तन्मध्ये पौनः पुन्येन प्रतिपादनमभ्यासः,यथा तत्रैवाद्वितीयवस्तुनोमध्ये "तत्त्वमसीतिनवकृत्वः प्रतिपादनं ॥ २ ॥ प्रकरणप्रतिपाद्यस्यार्थस्य प्रमाणान्तरेणाविषयीकरणमपूर्व वं, यथातत्रैवाद्वितीयवस्तुनो मानान्तरेणाविषयीकरणं "आचार्य्यवान्पुरुषोवेदे तिसूचितम् ॥ ३ ॥ फलंतु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तत्रतत्रश्रूयमाणप्र योजनं,यथातत्रैव "तस्यतावदेवचिरंयावन्नविमोक्ष्ये अथसंपत्स्य इति अद्वितीय वस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते ॥ ४ ॥ प्रकरणप्रतिपाद्यस्य वस्तुनस्तत्र तत्र प्रशंसनमर्थवादः,यथातत्रैव "उततमादेशमप्राक्षो येनाश्रुतंश्रुतं भवत्यमत मतमविज्ञातं विज्ञातमित्यद्वितीयवस्तुप्रशंसनं,इदमुपलक्षणं सृष्टिस्थितिप्रलयप्रवेश संयमनानाम् ॥ ५ ॥ प्रकरणप्रतिपाद्यार्थसाधने तत्र श्रूयमाणा युक्तिरुपपत्तिः, यथातत्रैव "यथासोम्यैकेनमृत्पिण्डेन सर्वंमृन्मयंविज्ञातं स्याद्वाचारंभणं विका रोनामधेयं मृत्तिकेत्येवसत्यमित्याद्यद्वितीयवस्तुसाधने विकारस्य वाचारंभणमात्र त्वे युक्तिरुपपत्तिः श्रूयते ॥ ६ ॥ इति षाड्विधलिंगविवरणं वेदांतसारे स्थितम्, ( एतेनेति )ब्रह्मसूत्र अ० २ पा० १ सू० ३ अस्यार्थोनुपदमेवस्फुटः ॥

त्रकृता योगस्य निराकृतत्वात्, अयमेवाहितेबन्धः समाधिमनु तिष्ठतीत्यष्टावक्रादिभिः समाध्यनुष्ठानस्य बन्धकत्वप्रतिपादनाच्च कथं योगस्यात्मसाक्षात्कारहेतुत्वं कल्पयितुं युक्तम् ॥ गुरुरुवाच हेसोम्य श्रवणादिनासाकं योगस्य ज्ञानसाधनत्वाश्रवणेपि श्रुत्यन्तरस्मृतीतिहासपुराणादिषु तस्य तत्साधनत्वोद्घोषदर्शनात् गुणोपसंहारन्यायेन श्रुत्यन्तरेषु ज्ञानसाधनत्वेन प्रसिद्धस्यतस्या त्राप्युपसंहर्तुंशक्यत्वाच्च योगस्य तत्साधनत्वं युज्यतएव, तथाहि "अथतद्दर्शनाभ्युपायोयोगः, "अध्यात्मयोगाधिगमेनदेवं मत्वा धीरोहर्षशोकौजहाति, "श्रद्धाभक्तिध्यानयोगादवैहि, "ततस्तु तंपश्यतिनिष्कलन्ध्यायमानः, "यदापंचावतिष्ठन्ते ज्ञानानिमन सासह बुद्धिश्चनविचेष्टते तामाहुःपरमांगतिं तां योगमितिमन्यन्ते स्थिरामिन्द्रियधारणां अप्रमत्तस्तदाभवति योगोहिप्रभवाप्ययौ,

अयमेवेति )अष्टावक्रगीतायामात्मानुभवोपदेशप्रकरणस्थः श्लोकः १४ निष्क्रियस्य समाध्यनुष्ठानमितियत् अयमेवतेतवबन्धः हिं निश्चितं शुद्धवस्तुनितदयोगादितिभावः ॥ (अथतद्दर्शनेति) तस्यात्मनोदर्शनेसाक्षात्कारे अभ्युपायःसाधनभूतो योगो निरूप्यतइतिशेषः ( अध्यात्मयोगेति ) व्याख्यातंप्राक् ॥ ( श्रद्धाभक्तीति ) कैवल्योपनिषत्स्थम्, श्रद्धा गुरुवेदान्तवाक्येषुविश्वासः भक्तिर्भजनं ध्यानं विजातीयवृत्त्यनन्तरितसजातीयवृत्तिप्रवाहः अस्यैवपरिपाकोयोगः एषांसमाहारद्वंद्वः तस्माद्धेतुभूतात् आत्मानमवैहि अवगच्छेत्यर्थः, ( ततस्तुतमिति ) तृतीयमुण्डकस्थम्,ततः बुद्धिशुध्यनन्तरं निष्कलं निरवयवं तमात्मानं ध्यायमानः चिन्तयन्सन् पश्यत्युपलभतइत्यर्थः ( यदापञ्चेति ) कठोपनिषत्स्थम्,यदा पंच ज्ञानानि ज्ञायन्ते विषयाएभिरितिव्युत्पत्त्याज्ञानेन्द्रियाणि स्वाधिष्ठात्रा मनसासंकल्पाद्यात्मकेन सहावतिष्ठन्ते निवृत्तस्वस्वव्यापाराणि भवन्ति बुद्धिश्च निश्चयात्मिका। नविचेष्टते स्वव्यापारेषु नव्याप्रियते तांपरमाङ्गतिं गम्यतेज्ञायतेप्राप्यतेवाब्रह्म अनयेतिगतिः तां आहुः तथा स्थिरामचलान्तां स्वव्यापारत्यागपूर्वकं ब्रह्मैकाग्र्यलक्षणामिन्द्रियधारणां योगविदो योगं मन्यन्ते यदैवेन्द्रियाणां स्थिराधारणा तदाऽप्रमत्तो भवति हि यस्माद्योगः प्रभवाप्ययौ उपजनापायहेतुः उपेक्षितो योग इन्द्रियवृत्तीनां प्रभवं करोति अनुष्ठितस्तु तासां लयहेतुरित्यर्थः,

"यदात्मतत्वेनतुब्रह्मतत्वं दीपोपमेनेहयुक्तःप्रपश्येत्, "त्रिरुन्नतं स्थाप्यसमंशरीरं हृदिन्द्रियाणिमनसासन्निवेश्य ब्रह्मोडुपेनप्रतरे तविद्वान्स्त्रोतांसिसर्वाणिभयावहानि, " ओमित्येवंध्यायथआत्मा नं, "तेध्यानयोगानुगता अपश्यन्, "यच्छेद्वाङ्मनसीप्राज्ञ इ त्याद्याश्रुतयः ॥ स्मृतयस्तु यातिधर्म्मप्रकरणे मनुः,भूतभव्यानवे क्षेत योगेनपरमात्मनः ॥ देहद्वयंविहायाशुमुक्तोभवतिबन्धनात्॥ ध्यानयोगेनसंपश्येत् गतिमस्यान्तरात्मनः॥ सूक्ष्मतांचान्ववेक्षेत योगेनपरमात्मनः ॥ याज्ञवल्क्यः, इज्याचारदमाहिंसा दानस्वा ध्यायकर्म्मणां ॥ अयन्तुपरमोधर्म्मो यद्योगेनात्मदर्शम् ॥ महर्षि मातङ्गः, अग्निष्टोमादिकान्सर्वान् विहायद्विजसत्तमः॥ योगाभ्यास

( यदात्मतत्वेनेति ) श्वेता० अ० २ यदा युक्त अष्टाङ्गयोगयुक्तः इह हृदयकम ले दीपोपमेन सजातीयप्रकाशाप्रकाश्यत्वेसति प्रकाशैकस्वभावेनेत्यर्थः, ॥ आ त्मतत्वेनतु आत्मस्वरूपेणैव ब्रह्मतत्वं ब्रह्मस्वरूपं प्रपश्येत् प्रकर्षेण स्वयंप्रका शानन्दरूपत्रिविधपरिच्छेदशून्यब्रह्मरूपोहमस्मीत्यवगच्छेत् ( त्रिरुन्नतमिति ) श्वेता० अ०२ शरीरं समं दण्डाकारं त्रीण्युरोग्रीवाशिरांस्युन्नतानि यस्मिन्शरीरे तत्रिरुन्नतं स्थाप्य स्थापयित्वा ल्यप्छान्दसः त्रिरित्यत्र सुच्प्रत्ययार्थो न विवक्षितः हृदिहृत्कमले इन्द्रियाणि चक्षुरादीनि वागादीनि च मनसान्तःकरणेनेन्द्रियाश्व प्रग्रहभूतेन सन्निवेश्य निधाय सम्यक् निरुध्येतियावत् ब्रह्मोडुपेनप्रणवप्लवेन प्रणव जपतदर्थभावनाभ्यामितियावत् भयावहानि पतनहेतुत्वाद्भयदात्दृणिसर्वाणि स्त्रोतां सिसुरनरतिर्यक्स्थावरभेदभिन्नानि संसार सरितःस्त्रोतांसि वासनारूपाणिवा प्रतरेत प्रतरेत् उत्तरेत् विद्वान्पडितइत्यर्थः ( ओमित्येवमिति ) द्वितीयमुण्डकस्थम्, ओ मित्येवमोंकारालंवनाःसन्तःआत्मानं ध्यायथ ध्यायत चिन्तयतलोडर्थेलट्छान्दसः, ( तेध्यानेति ) श्वेताश्वतरस्थम्, ते ब्रह्मविदः ध्यानमेवपरिपाकावस्थामापन्नंयो गः तमनुगताःविचारमनुप्राप्ताःसन्तः देवात्मशक्तिमपश्यन्नितिसम्बंधः,यच्छेदिति, कठोपनिषत्स्थम्,वागित्यत्र द्वितीयैकवचनस्यलुक् मनसीत्यत्रसप्तम्येकवचनस्यदीर्घ त्वं छान्दसम्,प्राज्ञोयोगीपुरुषः वाग्वाचं तदुपलक्षितानि सर्वाणि इन्द्रियाणिमन सी मनसि संकल्पविकल्पात्मकेयच्छेदुपसंहरेत् विलापयेदित्यर्थः, (भूतेति) भूतम तीतंभव्यंभविष्यत् योगस्यसर्वज्ञतामुक्तिश्चफलमितिभावः, इज्येति, अग्निष्टोमेति

रतःशान्तः परंब्रह्माधिगच्छति ॥ ब्राह्मणक्षत्रियविशां स्त्रीशूद्राणांचपावनं ॥ शान्तयेकर्म्मणामन्यद्योगान्नास्तिविमुक्तये ॥ व्यतिरेकमुखेनाहदक्षः, स्वसंवेद्यंहितद्ब्रह्म कुमारीस्त्रीसुखंयथा ॥ अयोगीनैवजानाति जात्यन्धोहियथाघटमित्याद्याः ॥ इतिहासस्तु भारतं तत्र योगमार्गे व्यासः, अपिवर्गापकृष्टस्तु नारीवाधर्म्मकाङ्क्षिणी ॥ तावप्येतेनमार्गेण गच्छेतांपरमांगतिं ॥ यदिवासर्वधर्म्मज्ञो यदिवाप्यकृतीपुमान् ॥ यदिवाधार्म्मिकश्रेष्ठोयदिवापापकृत्तमः॥ अपिजिज्ञासमानोपि शब्दब्रह्मातिवर्त्तते ॥ भगवद्गीतायां, युंजन्नेवं सदात्मानं योगीनियतमानसः ॥ शान्तिंनिर्वाणपरमां मत्संस्थामधिगच्छति ॥ आदित्यपुराणे, योगात्संजायतेज्ञानं योगोमय्येकचित्तता ॥ स्कांदे, आत्मज्ञानेनमुक्तिःस्यात्तच्चयोगादृतेनहि ॥ सच योगश्चिरंकालमभ्यासादेवसिध्यति ॥ कूर्मपुराणे शिववाक्यं, अतःपरंप्रवक्ष्यामि योगंपरमदुर्लभं ॥ येनात्मानंप्रपश्यन्ति भानुमन्तमिवेश्वरं ॥ योगाग्निर्दहतिक्षिप्रमशेषंपापपंजरं ॥ प्रसन्नंजायतेज्ञानंज्ञानान्निर्वाणमृच्छति ॥ गारुडे, सचयोगाग्निनादग्धसमस्तक्लेशसंचयः ॥ निर्वाणंपरमंनित्यं प्राप्नोत्येवनसंशयः ॥ संप्राप्तयोगसिद्धिस्तु पूर्णोयस्त्वात्मदर्शनात् ॥ नकिंचिद्दृश्यतेकार्यं तेनैवसकलंकृतं ॥ आत्मारामःसदापूर्णःसुखमात्यन्तिकंगतः ॥ अन्यत्रापि, तपसाभावितात्मानो योगिनःसंयतेन्द्रियाः ॥ प्रतरन्तिमहात्मानो योगेनैवभवार्णवम् ॥ विष्णुपुराणे, योगएवपरंश्रेयस्तेषामित्युक्त्वा

स्वयं वेद्यमितिच, स्पष्टार्थः ॥ ( अपिवर्गेति ) वर्गापकृष्टः शूद्रः एतेन मार्गेण योगमार्गेण ( युंजन्निति ) गीता अ॰ ६ श्लो॰ १५ एवमुक्तप्रकारेण सदा आत्मानं मनो युंजन्समाहितंकुर्वन् नियतंनिरुद्धं मानसं चित्तं यस्य सः शान्तिं संसारोपरतिं प्राप्नोति कथंभूतां निर्वाणं परमं प्राप्यं यस्यांतां मत्संस्थां मद्रूपेणावस्थितिम् ( श्रीधरी )( योगात्संजायतइति) आत्मज्ञानेनेतिच) स्पष्टार्थौ ( अतःपरमिति ) भानुमन्तमिवेति स्वप्रकाशमित्यर्थः; ईश्वरमिति तदभिन्नमित्यर्थः,प्रसन्नंसत्वोत्कर्षात्मकम्॥( सचयोगेति ) सःयोगी संप्राप्तयोगसिद्धिः प्राप्तयोगनिष्पत्तिः पूर्णः व्यापकब्रह्मरूपः नकिंचिदिति तस्यैतिशेषःस्पष्टमन्यत् ॥ ( तपसेति ) तपः कृच्छ्रादिभावितात्मानः संस्कृतचित्ताः(योगएवेति) स्पष्टार्थः॥

न्पुरा ॥ वासिष्ठे, द्वौक्रमौचित्तनाशाय योगोज्ञानंचराघव ॥ योगो वृत्तिनिरोधोहि ज्ञानंसम्यगवेक्षणं ॥ दुःसहारामसंसारविषवेगविषूचिका ॥ योगगारुडमंत्रेण पावनेनोपशाम्यतीति॥ शिष्यउवाच हेभगवन् यदिश्रुतिस्मृतीतिहासपुराणप्रसिद्धं योगस्य ज्ञानहेतुत्वं तर्हि कथं भगवता सूत्रकृता एतेनयोगःप्रत्युक्त इतियोगो निराकृतः ॥ गुरुरुवाच हेसोम्य नहि भगवता सूत्रकृता ब्रह्मसाक्षात्कारकारणस्य भावनाख्ययोगस्य निषेधः कृतः किन्तु योगशास्त्रप्रसिद्धं प्रकृतेरुपादानत्वमीश्वरस्य निमित्तत्वं चेत्यादिकमेव निराकृतं ॥ शिष्यउवाच हेभगवन् सू० एतेनयोगःप्रत्युक्त इतिसामान्यतो योगमात्रस्य निषेधश्रवणात्कथमंशतो निषेधोंशतोऽनिषेध इत्यवगन्तुं शक्यं ॥ गुरुरुवाच हेसोम्योदाहृतश्रुतिस्मृतीतिहासादिविरोधप्रसंगादस्य सूत्रस्यातिदेशाधिकरणत्वाच्च तथावगम्यते, तथाहि पूर्वाधिकरणे तावत्सांख्यमतप्रसिद्धं प्रकृत्युपादानत्वादिकमेव निराकृतं अतोस्यसूत्रस्य एतेन सांख्यमतप्रसिद्ध प्रकृत्युपादानत्वादिनिराकरणहेतुकदम्बेन योगो योगशास्त्रप्रसिद्ध प्रकृत्युपादानत्वादिरपि प्रत्युक्तो निराकृत इत्येवार्थौवक्तव्यः, नह्यधिकस्याप्रसक्तस्य भावनाख्ययोगस्यातिदेशन्यायेन प्रत्याख्यानं युक्तं, तत्रैव भगवताभाष्यकृता येनत्वंशेन नविरुध्यते तेनेष्टमेव सांख्ययोगस्मृत्योः सावकाशत्वमित्यनेन वेदाविरुद्धस्य भावनाख्ययोगस्य स्वीकृतत्वात्, नहि केवलसूत्रपाठमात्रेण तदर्थज्ञानं सम्भवति गूढार्थत्वात्, किंच यदिभगवतो बादरायणाचार्य्यस्य सर्वांशेन योगनिषेधोभिप्रेतस्तर्हि तत्कृतयोगसूत्रभाष्यस्य वैयर्थ्यमापद्येत नचेष्टापत्तिः तत्कृतस्य सर्वस्यापि तथात्वप्रसङ्गात्, तस्मादंशतएव तन्निषेध इतिध्येयम्॥ तदाहयोगसूत्रवृत्तौनारायणतीर्थः,

(द्वौक्रमाविति) क्रमो क्रम्यतःप्राप्नुतः जनयतइतियावत् कार्य्यमितिक्रमावुपायौ सम्यगवेक्षणं ब्रह्मसाक्षात्कारः विषवेगोविषूचिकाइव तदाख्यरोगइव दुष्प्रतीकारत्वाद्विषवेगविषूचिका उपमितसमासः संसारएवसा संसारविषवेगविषूचिका योगगारुडमंत्रेण योगएव गारुडो गरुडदेवताकोमन्त्रस्तेन शाम्यतीत्यर्थः ॥

स्वतन्त्रसत्यत्वमुखं प्रधाने सत्यंच चिद्भेदमभेदवाक्यैः ॥ व्यासो निराचष्ट नभावनाख्यं योगं स्वयं निर्मितब्रह्मसूत्रैरिति, यत्त्वष्टा वक्रादिभिः समाध्यनुष्ठानस्य बन्धकत्वमुक्तमित्युक्तं तदपि समाधिस्थोहमित्यहङ्कारपरं बोध्यं, अहंकारस्यैव बंधकत्वश्रवणान्नि रहङ्कारैः शुकादिभिरनुष्ठितसमाधेर्बन्धकत्वाश्रवणाच्च, अन्यथा तदुपदेशस्यापि बन्धकत्वंस्यात् व्यापारत्वाविशेषात् ॥ यद्वा निर्विशेषचिन्मात्रे वस्तुतो भावनाविशेषस्य समाधेरसंभवप्रतिपादनद्वारा तत्स्वरूपस्यात्यन्तशुद्धता बोधनपरंतदित्यवगन्तव्यं न समाधेर्ज्ञानसाधनत्वनिषेधपरं, तत्रैव शुद्धमद्वयमात्मानं भावयन्ति कुबुद्धयः ॥ नतु जानन्तिसंमोहाद्यावज्जीवमनिर्वृता इतिब्रह्मभावनात्मकनिदिध्यासनस्यापि निषेधदर्शनात्, अतःसिद्धं योगस्य साक्षात्कारकारणत्वं ॥ सच योगो द्विविधः ज्ञानयोगोऽद्वैतयोगश्चेति तत्र आत्मानात्मविवेकज्ञानाभ्यासरूप आद्यः, अभेदभावनारूपो द्वितीयः, यद्वा निरालम्बाभिधो निराभासाभिधश्चेतिद्विविधः, तत्र शिवलक्षणा स्वस्वरूपाभिव्यक्तिर्महायोगो निरालम्बः,

( स्वतन्त्रेति ) व्यासो ब्रह्मसूत्रप्रणेताबादरायणः प्रधाने गुणत्रयसाम्यावस्थारूपायां प्रकृतौ स्वतन्त्रसत्यत्वमुखं स्वतन्त्रंचसत्यंचतेतयोर्भावौस्वतन्त्रसत्यत्वेमुखंआदिर्यस्य तत् स्वतन्त्रसत्यत्वमुखं, धर्मं योगशास्त्राभिमतं निराचष्टनिराकृतवान् वेदान्तिमते ईश्वराधिष्ठितायाः प्रकृतेः कारणत्वेनास्वातन्त्र्यात् मिथ्यात्वाच्च, तथा सत्यंपारमार्थिकं चिद्भेदंच चितोर्जीवेश्वरयोर्भेदंच अभेदवाक्यैस्तत्त्वमस्यादिभिर्निराचष्ट नतु भावनाख्यं संप्रज्ञातादिरूपंयोगं निराचष्ट, व्यासेनेदंकुत्रकृतमित्यतआह ( स्वयंनिर्मितब्रह्मसूत्रैः ) स्वयंनिर्मितानियानिब्रह्मसूत्राणि एतेनयोगःप्रत्युक्त इत्यादीनितैरित्यर्थः, प्रधानेस्वातंत्र्यंच चेतनमधिष्ठातारमनपेक्ष्य जगदुत्पादकत्वम्, सत्यत्वं कालत्रयाबाध्यत्वंमुखार्थकादिशब्दाद्व्यापकत्वादिकंच तथासाङ्ख्यकारिका हेतुमदनित्यमव्यापिसक्रियमनेकमाश्रितंलिङ्गम्। सावयवंपरतन्त्रंव्यक्तंतद्विपरीतमव्यक्तमिति, (शुद्धमद्वयमिति) अष्टावक्रगीतायांशान्तिशतकस्थःश्लोकः, ४२, कुबुद्धयोमूढबुद्धयएवशुद्धमद्वयमात्मानं भावयन्ति चिन्तयन्ति नतुजानन्तिसाक्षात्कुर्वन्ति कुतःसंमोहात् अतएवयावज्जीवमनिर्वृताःपरमसन्तोषरहिताःसन्तोषस्यज्ञानैकलभ्य

तत्साधनभूतोऽभावयोगोनिराभासः, तदुक्तम् । योगस्तुद्विविधोज्ञे योह्यभावःप्रथमोमतः । अपरस्तुमहायोगः सर्वयोगोत्तमोत्तमः ॥ शून्यं सर्वनिराभासं स्वरूपंयत्रचिन्त्यते । अभावयोगःसम्प्रोक्तो ये नात्मानं प्रपश्यति ॥ यत्रपश्यति चात्मानं नित्यानन्दं निरंजनम् । मयैक्यं समहायोगो भावितःपरमःस्वयमिति, यद्वा संप्रज्ञातोऽसंप्रज्ञातश्चेति द्विविधः, तल्लक्षणंतुवृत्तिनिरोधइत्यवोचाम, वृत्तीनां चित्तधर्म्मत्वात्तन्निरोधात्मकयोगस्यापि चित्तधर्म्मत्वमितिध्येयं ॥ तस्यचित्तस्यत्रिगुणात्मकत्वात् पंचभूमयः क्षिप्तं मूढं विक्षिप्त मेकाग्रं निरुद्धंचेति, तत्ररजसात्यन्तं चलं चित्तं क्षिप्तं, तच्चसदैवदैत्यदानवादीनां, तमसानिद्रावच्चित्तं मूढं तच्च सदैवरक्षःपिशाचादीनां, क्षिप्ताद्विशिष्टंविक्षिप्तं, तच्च सदैवदेवानां, अत्यन्तं चलचितस्य कादाचित्कंस्थिरत्वमत्रविशेषः ॥ रजस्तमोवृत्तिनिरोधपूर्वकंसत्वप्रधानंसदेकविषयंचित्तमेकाग्रं तच्च परमेश्वरभक्तानां सर्वेषां मनुष्यादीनां, तन्निरोधपूर्वकं संस्कारमात्रावशेषं चित्तं निरुद्धं तच्च योगिनांमेव भवति ॥ एकस्य चित्तस्य ज्ञानसुखादिशीलत्वा त्प्रवृत्तिगुणादिमत्वा दालस्यदैन्यादिमत्वाच्च सत्वरजस्तमोगुणात्मकत्वमतःक्षिप्ताद्यनेकभूमय इतिध्येयम् ॥ यदातुरजःप्रधानं चित्तं क्षिप्तं भवति तदा ऐश्वर्य्यादिकं कामयमानं सद्विषयप्रियं भवति ॥ यदापुनस्तमःप्राधानं चित्तं मूढं भवति तदाऽधर्म्माऽवैराग्यानैश्वर्य्यनिद्रादिकमुपगच्छति, यदातु विक्षिप्तेचित्ते सत्वात्किंचिदूने रजस्तमसी मिथःसमे भवतस्तदा तच्चित्तं ध्यानाभिमुखं भवति, यदिपुनस्तास्मिन्समये कर्म्मवशाद्रजस्तमसोर्वैषम्यं भवेत्तर्हि तमसा सत्वमाच्छाद्य रजसैश्वर्य्यं कामयमानं विषयप्रियं भवति ॥ एवंच क्षिप्तमूढयोर्योगगन्धस्याप्यनवकाशः ॥ विक्षिप्तेतु चित्ते योगः कादाचित्क इतिफलितं ॥ एकाग्रे सत्वप्रधानेस्वेकविषयस्थिते चित्ते रजस्तमोवृत्तिनिरोधात्सात्विकवृत्तेर्विशेषात्संप्रज्ञातयोगो भवति,

त्वादित्यर्थः ॥ ( योगस्तुद्विविधइति ) अभावयोगस्वरूपमाह ( शून्यमिति ) महायोगस्वरूपमाह(यत्रपश्यतीति)मयैक्यं असमच्छब्दगम्येनपरमात्मनैकीभावइत्यर्थः,

मय्येकचित्ततायोगो वृत्त्यन्तरनिरोधत इतिकूर्मपुराणोक्तेः॥ अत्रायं क्रमः प्रथमंतावद्वेदान्तविचारजनितसंस्कारवति सत्वप्रधाने एकाग्रेचित्ते परमात्मसाक्षात्कराभिमुखी सात्वकीश्रद्धा जायते, तया तद्विषयकयत्नः, तेनच क्रमेण यमनियमासनप्राणायामप्रत्याहारधारणाध्यानानामभ्यासः, ततोऽतिस्वच्छस्फटिकमणेर्जपाकुसुमाद्युपरक्तस्य स्वस्वरूपाभिभवेन रक्ताद्याकारेण स्फुरणवद्यमनियमाद्यभ्यासवशात्क्षीणरजस्तमोवृत्तिकस्य चित्तमणेरज्ञानोपहितप्रत्यगभिन्नपरमात्मनोपरक्तस्य स्वस्वरूपाभिभवेन परमात्माकारेण स्फुरणरूपः संप्रज्ञातसमाधिर्भवतीति ॥ अयंच ध्येयाकाराचित्तवृत्तिप्रवाहरूपध्यानस्यैव परिपाक इतिध्येयं ॥ उक्तंचेदंपातंजले, सू० तदेवार्थमात्रनिर्भासंस्वरूपशून्यमिवसमाधिरिति, मुक्तिकोपनिषदिद्वितीयाध्यायेपि "ब्रह्माकारमनोवृत्तिप्रवाहोहंकृतिंविना ॥ संप्रज्ञातसमाधिःस्यात् ज्ञानाभ्यासप्रकर्षकइति ॥ अहंकृतिंविनेति ध्यातृध्यानस्फूर्तिविनेत्यर्थः ॥ अयमेव लययोग इत्युच्यते तदुक्तं नवस्वेवचचक्रेषु मरुदक्षमनोलयः ॥ लययोगइतिख्यातः सम्यक् प्रज्ञानयोगत इति ॥ सचद्विविधःशब्दानुविद्धो दृश्यानुविद्धश्चेति तत्रास्मीतिशब्दविशिष्टतया प्रत्यगभिन्नपरमात्मरूपध्येयमात्रस्फुर्तिमान्समाधिराद्यः, निखिलसाक्षिरूपोहामितिदृश्यसाक्षित्वविशिष्टतयाप्रत्यगभिन्नपरमात्मरूपध्येयमात्रस्फूर्तिमान्द्वितीयः, तथाच सरस्वतीरहस्योपनिषदि "दृश्यशब्दानुवेधेन सविकल्पःपुनर्द्विधा ॥ कामाद्याश्चित्तगादृश्यास्तत्साक्षित्वेनचेतनं ॥ ध्यायेद्दृश्यानु

( तदेवेति ) योगसूत्रे पा० ३ सू० ३ अतिस्वच्छचित्तवृत्तिप्रवाहरूपं ध्यानमेवार्थमात्रस्वरूपेण निर्भासमानं समाधिः मात्रचोर्थमाह ( स्वरूपशून्यमिवेति ) ध्यानस्वरूपज्ञानशून्यं इवशब्देन ध्यानस्यसत्तांद्योतयति यथास्वच्छस्फटिकमणिः कुसुमरूपेणैव निर्भासते नस्वरूपेण तद्वदित्यर्थः ( मणिप्रभा ) ( ब्रह्माकारेति ) स्पष्टोर्थः ॥ ( नवस्वेवेति ) मूलादि ब्रह्मरन्ध्रान्तेषु मस्तकमूर्द्धसहितेषु नवसु चक्रेषु सम्यक् प्रज्ञानं ब्रह्मात्मज्ञानं तद्योगतस्तदभ्यासप्रकर्षात् मरुदक्षमनसां प्राणेन्द्रियमनसां दुग्धांबुवत् ध्येयभेदेनावस्थानात्मकोयोलयः सएव लययोगइत्याख्यातः, ( दृश्यशब्देति ) स्वानुभूतिरसावेशात् स्वस्यात्मनोयानुभूतिरनुभवः सएवरस

विद्धोयं समाधिःसविकल्पकः ॥ असङ्गःसच्चिदानन्दःस्वप्रभोद्वैतव र्जितः ॥ अस्मीतिशब्दविद्धोयं समाधिःसविकल्पकः ॥ स्वानुभूतिरसावेशाद्दृश्यशब्दानपेक्षितः ॥ निर्विकल्पसमाधिःस्यान्निवातस्थितदीपवदित्युक्तम् ॥ शिवशक्त्यादिमूर्तिध्येयमात्रस्फूर्तिमान्समाधिः सवितर्कः ॥ तथान्येपि ये सविकल्पसमाधिभेदाभूततन्मात्राहंकारादिविषया निर्वितर्कादयो योगशास्त्रे प्रसिद्धाः सन्ति तेषां मोक्षप्रतिबन्धकाकाशगमनान्तर्द्धानपरकायप्रवेशादिसिद्धिहेतुत्वेन प्रकृते प्रयोजनाभावाद्विस्तरभयाच्च तेऽत्र न प्रकाश्यन्ते, तदनुष्ठानाभावादेव ज्ञानिनां तादृशसिद्ध्यभाव इतिध्येयम् ॥ सच अन्नपूर्णोपनिषदि चतुर्थाध्याये "जीवन्मुक्तस्यकिंलक्ष्मह्याकाशगमनादिकं ॥ तथाचेन्मुनिशार्दूल तत्रैनैवप्रलक्ष्यते ॥ अनात्मविदमुक्तोपि नभोविहरणादिकं ॥ द्रव्यमन्त्रक्रियाकालशक्त्याप्नोत्येव हिद्विज ॥नात्मज्ञस्यैषविषय आत्मज्ञोह्यात्ममात्रदृक् ॥ आत्मनात्मनिसंतृप्तोनाविद्यामनुधावतीत्यादिनाप्रपंचितः ॥ योगवासिष्ठेपि श्रीरामउवाच जीवन्मुक्तशरीराणां कथमात्मविदांवर ॥ शक्तयो नेहदृश्यन्ते आकाशगमनादिकाः॥ श्रीवसिष्ठउवाच ॥ अनात्मविद मुक्तोपिनभोविहरणादिकम् ॥ द्रव्यमंत्रक्रियाकालशक्त्याप्नोत्येवराघव ॥ नात्मज्ञस्यैषविषय आत्मज्ञोह्यात्मवान्स्वयं ॥ आत्मनात्मनि संतुष्टो नाविद्यामनुधावति ॥ येकेचनजगद्भावास्तानविद्यामयान्विदुः॥ कथंतेषुकिलात्मज्ञस्त्यक्तवाविद्यांनिमज्जति ॥ द्रव्यमंत्रक्रियाकालयुक्तयःसाधुसंविदः ॥ परमात्मपदप्राप्तौनोपकुर्वन्तिकाश्चनेति ॥

आनन्दस्तस्यावेशो वृत्तिं विनास्फुरणम् अतएव दृश्यशब्दानपेक्षितत्वमितिभावः, ( जीवन्मुक्तस्येति ) ( द्रव्येति ) मण्यौषधादिद्रव्यशक्त्या मन्त्रशक्त्या योगाभ्यासादिक्रियाशक्त्यातत्परिपाककालशक्त्याच कदाचिदेवाप्नोति दृष्टांतार्थंवा कालग्रहणं यथा पिपीलिका ग्रीष्मान्तकालशक्त्या पक्षोद्गमान्नभोगतिं प्राप्नोतितद्वत्, एषनभोगत्यादिर्नविषयः अभिलाषयोग्यः तुच्छत्वादात्ममात्रदृक् दृश्ये मिथ्यात्वनिश्चयात् अविद्यामाविषयकं तुच्छफलम् ॥ ( श्रीरामउवाचेति ) योगवासिष्ठे उपशमप्रकरणे एकोननवतितमसर्गस्था एतेश्लोकाः, जीवन्मुक्तशरीराणामितिषष्ठीतत्पुरुषः आत्मवान् लब्धात्मा, यथात्मज्ञानस्यक्रियाफलेऽनुपयोगः तथाज्ञानफले द्रव्यदेशक्रियादेरप्यनुपयोग इत्याह ( द्रव्येति ) साधुसंविदस्तत्वज्ञानस्य,

एतेश्लोका वराहोपनिषदि द्वितीयाध्यायान्तपठितमंत्रानुवादरूपा बोध्याः ॥ मनोनाशवासनाक्षयतत्वज्ञानानां परस्परंहेतुहेतुमद्भावे नावस्थितानां द्वन्द्वत्रयस्य यौगपद्येनाभ्यासरूपसमाधिंविना परमात्मपदप्राप्तेर्दुःसाध्यत्वात्सविकल्पकसमाध्यनुष्ठानस्यावश्यकत्वं बोध्यं ॥ उक्तंचेदं व्यतिरेकमुखेन योगवासिष्ठे, यावद्विलीनंनमनो नतावद्वासनाक्षयः ॥ नक्षीणावासनायावच्चित्तंतावन्नशाम्यति ॥ यावन्नतत्वविज्ञानं नतावच्चित्तसंक्षयः ॥ यावन्नचित्तोपरमोनतावत्तत्ववेदनं ॥ यावन्नवासनानाशस्तावत्तत्वागमःकुतः ॥ यावन्नतत्वसंप्राप्तिर्नतावद्वासनाक्षयः ॥ तत्वज्ञानंमनोनाशो वासनाक्षयएवच ॥ मिथः कारणतांगत्वा दुःसाध्यानिस्थितान्यतः ॥ त्रयएतेसमंयावन्नस्वभ्यस्तामुहुर्मुहुः ॥ तावन्नतत्वसंप्राप्तिर्भवत्यपिसमाशतैरिति,

( यावद्विलीनमिति ) उपशमप्रकरणाद्दिनवतितमसर्गस्थाः, प्रदीपज्वालासंतानवद्वृत्तिसन्तानरूपेणपरिणममानमन्तःकरणद्रव्यं मननात्मकत्वान्मन इत्युच्यते तस्यनाशोनाम वृत्तिरूपपरिणामंपरित्यज्य निरुद्धत्वाकारेण परिणामः, पूर्वापरपरामर्शमन्तरेण सहसोत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतुश्चित्तगतसंस्कारो वासना पूर्वपूर्वाभ्यासेन चित्तवास्यमानत्वात् तस्याश्च वासनायाः क्षयोनाम विवेकजन्यायां शान्त्यावासनायां दृढायां सत्यपिबाह्यनिमित्ते क्रोधाद्यनुत्पत्तिः तत्र मनोनाशाभावेवृत्तिषूत्पद्यमानासु कदाचिद्बाह्यनिमित्तेन क्रोधाद्युत्पत्तेर्नास्तिवासनाक्षयः, अक्षीणायांतु वासनायां तथैववृत्त्युत्पादनान्नास्तिमनोनाशः, ( यावदिति ) इदंसर्वमात्मैव प्रतीयमानंतु रूपरसादिकं जगन्मायामयं नत्वेतद्वस्तुतोस्तीतिनिश्चयस्तत्वज्ञानं तस्यानुत्पत्तौरूपरसादिविषयाणां सद्भावेसति तद्गोचराश्चित्तवृत्तयो ननिवारयितुं शक्यन्ते यथा प्रक्षिप्यमाणेष्विन्धनादिषु वन्हिज्वाला ननिवार्यते तद्वदसतिचित्तोपरमे वृत्तिर्गृह्यमाणेषु रूपादिषु "नेहनानास्ति किंचनेतिश्रुतेर्यजमानःप्रस्तर इत्यादेरिव प्रत्यक्षाविरोधशंकया ब्रह्माद्वितीयमित्येतादृशस्तत्वनिश्चयोनोदेयात् ( यावन्नवासनेति ) क्रोधादिवासनास्वनष्टासुशमदमादिसाधनाभावात् नतत्वज्ञानमुदेति, अज्ञातेचाद्वितीयब्रह्मतत्वे क्रोधादिनिमित्तस्यसत्यत्वभ्रमस्यानपायान्नवासनाक्षीयते; एवंतत्वज्ञानं मनोनाशइति श्लोकोक्तानां त्रयाणां तत्वज्ञानादीनांमध्येद्वयोर्द्वयोर्मेलनेनप्राप्ततत्वज्ञानादिद्वन्द्वत्रयस्य व्यतिरेकमुखेनकार्यकारणभावोबोध्यः ( त्रयएतेइति ) समंयुगपत्समाशतैःसंवत्सरशतैः

अयंभावः तत्वज्ञानस्य श्रवणादिकं साधनं, मनोनाशस्य योगः, वासनाक्षयस्य प्रतिकूलवासनोत्पादनं, एतेषांसाधनाना यौगपद्याभ्यासाद्युगपदेव तत्वज्ञानादिकार्य्यमुत्पद्यते, तदभावे तदभावइति ॥ एतेश्लोका अन्नपूर्णोपनिषदि चतुर्थाध्यायगतानां "याव द्विलीनमित्यादिवाक्यानामनुवादरूपा एवेत्यवगन्तव्याः ॥ मुक्तिकोपनिषदि द्वितीयाध्याये "वासनाक्षयविज्ञानमनोनाशामहामते ॥ समकालंचिराभ्यस्ता भवन्ति फलदामताः ॥ त्रयएते समंयावन्नाभ्यस्ताश्चपुनःपुनः ॥ तावन्नपदसंप्राप्तिर्भवत्यपिसमाशतैः ॥ एकैकशो निषेव्यन्ते यद्येतेचिरमप्यलं ॥ तन्नसिद्धिंप्रयच्छन्ति मन्त्रास्संकीलिताइव ॥ त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयोदृढाः ॥ निःशंकमेवत्रुटयन्ति विसच्छेदाद्गुणाइव ॥ जन्मान्तरशताभ्यस्ता मिथ्यासंसारवासना ॥ साचिराभ्यासयोगेन विना न क्षीयतेक्कचिदित्युक्तं ॥ एतेन समाध्यभ्यासमन्तराज्ञानानुत्पत्तिरिति सिद्धं ॥ शिष्यउवाच हेभगवन् जनकादीनां समाध्यभ्यासमन्तरेणाप्यप्रतिबद्धज्ञानमोक्षयोः श्रवणात्कथं तदनुष्ठानस्यावश्यकत्वं । गुरुरुवाच हेसोम्यतेषांजन्मान्तरानुष्ठितसमाध्यभ्यासजनिततत्संस्कारवशाज्ज्ञानोत्पत्तिरितिश्रूयतेपुराणादौ, तथाहि जैगीषव्योयथाविप्रो यथाचैवासितादयः॥ क्षत्रियाजनकाद्यास्तु तुलाधारादयोविशः॥ संप्राप्ताःपमांसिद्धिं पूर्वाभ्यस्तस्वयोगतः॥ धर्म्मव्या

( वासनाक्षयेति ) तत्वज्ञानादीनां समकालाभ्यासाभावेबाधकमाह ( एकैकशइति ) मन्त्रशास्त्रेहि मन्त्राणांसिद्धिप्रतिबन्धकाः छिन्नादयोदोषाः पंचाशत्सङ्ख्याकाः परिगणितास्तन्मध्ये कीलितनामाकश्चनदोषः तल्लक्षणन्तुमूलरुद्रकृतभुवनेश्वरीतिलके, आदिमध्यावसानेषु हंसःप्रासादवाग्भवौ ॥ हकारोबिन्दुमांजीवोरावश्चापिचतुष्कलः ॥ मायानमामिचपदंनास्तियस्मिन्सकीलितः, इति सार्द्धश्लोकेनप्रदर्शितः, तथाच यथाकीलितामंत्राः सिद्धिंनप्रयच्छान्ति तथातत्वज्ञानादीनांमध्ये तदेकैकनिषेवणं नालंसिद्धिंनप्रयच्छंतीत्यर्थः, हृदयग्रन्थयः अन्तःकरणतद्धर्मतादात्म्यसंसर्गाध्यासाः त्रुटयन्ति छिद्यन्ते गुणास्तन्तवः, ननु त्रयाणामपिचिराभ्यासःकिमर्थं तत्राह(जन्मान्तरेति)शतशब्दआनन्त्ये संसारसंततिर्द्वैतवासना ( जैगीषव्यइति ) असितोनामऋषिविशेषः धर्म्मव्याधादयस्सप्तम

धादयः सप्त शूद्राः पैलवकादयः ॥ मैत्रेयीसुलभाशार्ङ्गी शांडि लीचतपस्विनी ॥ एतेचान्येचबहवो नीचयोनिगतात्रपि ॥ ज्ञान निष्ठांपरांप्राप्ताः पूर्वाभ्यस्तस्वयोगत इति, किंच वसिष्ठनारदव्या सशुकजैमिनिगौडपादगोविंदपाद श्रीशंकरभगवत्पादादीनां यो गित्वप्रसिद्ध्यापि तदनुष्ठानस्यावश्यकत्वं वोध्यं ॥ उक्तसविकल्प समाधौ ध्येयाकारसत्ववृत्तेः सत्वात्रिपुटीलयाभावेपि लौहित्या भिन्नस्फटिकवद्ध्येयाभिन्नशुद्धात्मनो भानमिति ध्येयं ॥ अयमेव दीर्घकालव्यपीसन्संप्रज्ञाताख्योयोग इत्युच्यते, एतत्समाधिनि ष्ठेन योगिना शब्दानुमानाभ्यां परोक्षत्वेनज्ञातोर्थः साक्षात्क्रियते, तत्साक्षात्कारादविद्यादिक्लेशक्षयो भवति, ततः पुण्यपापकर्म्मणां दाहः, ततःसंस्कारमात्रशेषे निरुद्धेचित्ते सात्विकवृत्तेरपि निरोधा दसंप्रज्ञातसमाधिर्भवति ॥ उक्तंचेदंभगवताबादरायणाचार्येण, य स्त्वेकाग्रेचेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोतिचक्लेशान्कर्म्मबन्ध नानि श्लथयति निरोधमभिमुखंकरोति स संप्रज्ञातोयोग इत्या ख्यायतइति ॥ अध्यात्मोपनिषदिनिदिध्यासनलक्षणमुक्त्वा "ध्या तृध्यानेपरित्यज्य क्रमाद्ध्येयैकगोचरं ॥ निवातदीपवच्चित्तं समाधिर भिधीयते॥वृत्तयस्तुतदानीमप्यज्ञाता आत्मगोचराः॥स्मरणादनुमी

हाभारतेप्रसिद्धाः ( यस्त्वेकाग्रइति ) अथयोगानुशासनमिति सूत्रभाष्यस्थम्, यस्तु समाधिरेकाग्रे ध्येयाभिमुखे चेतसि सद्भूतमनारोपितमर्थं प्रद्योतयति तद्विषयां साक्षात्काररूपांवृत्तिं जनयति तथा क्लेशानस्मितादीन् क्षिणोति समुच्छिनत्ति त था कर्मरूपाणिवन्धनानि श्लथयति नाशयति तथा निरोधं पंचमींनिरोधाख्यांचि त्तभूमिकामभिमुखं करोति चित्तेतद्योग्यतामापादयति स संप्रज्ञातसमाधिरित्यर्थः, ( ध्यातृध्यानइति ) निदिध्यासनेतावद्ध्याताध्यानं ध्येयंचेतित्रितयंभासते तत्र यदाचित्तमभ्यासवशेन ध्यातृध्याने ध्यातारं ध्यानंच क्रमात्परित्यज्य ध्येयैकगोचरं ध्येयमेवैको गोचरो विषयो यस्यतत्तथाविधं भवति तदासमाधिरित्युच्यते, तत्र दृष्टान्तः ( निवातेति ) वायुरहितेप्रदेशेवर्त्तमानोदीपो यथा निश्चलोभवति तद्वदि त्यर्थः, ननु समाधौ वृत्तीनामनुपलब्धौ ध्येयैकगोचरत्वमपि निश्चेतुं नशक्यमि त्याशंक्य वृत्तिसद्भावस्यानुमानगम्यत्वान्नास्तिशंकावकाशइत्याह ( वृत्तयस्त्विति )

यन्ते व्युत्थितस्य समुत्थितात् ॥ अनादाविह संसारे संचिताः कर्मकोटयः ॥ अनेनविलयंयान्ति शुद्धधर्म्मोविवर्द्धते ॥ धर्म्ममेघमिमंप्राहुस्समाधिंयोगवित्तमाः ॥ वर्षत्येषयतोधर्माऽमृतधारास्सहस्रशः ॥ अमुना वासनाजाले निःशेषंप्रविलापिते ॥ समूलोन्मूलितेपुण्यपापाख्ये कर्म्मसंचये ॥ वाक्यमप्रतिवद्धंसत्प्राक्परोक्षावभासिते ॥ करामलकवद्बोधमपरोक्षं प्रसूयते ॥ वासनाऽनुदयोभोग्ये वैराग्यस्यतदावधिः ॥ अहंभावोदयाभावो बोधस्यपरमावधि ॥ लीनवृत्तेरनुत्पत्तिर्मर्यादोपरते

आत्मगोचराः आत्मागोचरोविषयोयासांताः वृत्तयस्तु तदानीं समाधिकाले अज्ञाता अपि व्युत्थितस्य समाधेरुत्थितस्य समुत्थितात्तदुत्पन्नात्स्मरणादेतावन्तं कालं समाहितोभूवमित्येवंरूपादनुमीयन्ते यद्यत्स्मर्यंते तत्तदनुभूतमितिव्याप्तेर्लोकसिद्धत्वादित्यर्थः, अस्यसमाधेरवान्तरफलमाह ( अनादाविति ) अनादाविहास्मिन्संसारे संचिताः संपादिताः कर्मकोटयः कर्मणांपुण्यापुण्यलक्षणानां कोटय इत्युपलक्षणं अपरिमितानि कर्माणीत्यर्थः, ॥ अनेनसमाधिनाविलयं यांति विनश्यन्ति "क्षीयन्तेचास्यकर्माणि तस्मिन्दृष्टेपरावर इतिश्रुतेः, शुद्धोयोधर्म्मः सविलासाविद्यानिवर्त्तकसाक्षात्कारसाधनभूतोधर्मो विवर्द्धते, तत्रप्रमाणमाह ( धर्मेति ) योगवित्तमा अतिशयेनयोगज्ञाः ब्रह्मसाक्षात्कारवन्तइतियावत् इमंसविकल्पसमाधिं धर्ममेघंप्राहुः, एतदुपपादयति ( वर्षतीति ) यतःकारणादेषसमाधिः धर्मामृतधाराःधर्म्मलक्षणामृतधाराःसहस्रशो वर्षति "क्षणमेकंक्रतुशतस्यापीतिश्रुतेः, अतोधर्ममेघंप्राहुरितिपूर्वेणान्वयः; इदानीं समाधेःपरमंप्रयोजनमाह ( अमुनेति ) अमुनासमाधिना वासनाजाले अहङ्कारममकारकर्तृत्वाद्यभिमानेहेतुभूते ज्ञानविरुद्धे संस्कारसमूहे निश्शेषंयथाभवतितथाप्रविलापिते विनाशिते पुण्यपापाख्ये कर्मसंचये समूलोन्मूलिते मूलसहितंयथाभवतितथोन्मूलिते उद्धृते विनाशितइतियावत्, फलितमाह ( वाक्यमिति ) वाक्यंतत्त्वमस्यादिवाक्यं अप्रतिवद्धंसत्कर्मवासनाभ्यांप्रतिबन्धरहितंसत् प्राक्परोक्षावभासिते पूर्वंपरोक्षतयाप्रकाशिते तत्वे करामलकवत्करस्थितामलकगोचरमिवापरोक्षतया तत्वावभासनसमर्थं बोधंज्ञानं प्रसूयते जनयतीत्यर्थः; एतेमन्त्राः पंचदश्यांतत्वविवेकेऽनूदिताः, ( वासनेति ) यदाभोग्ये वासनानामनुदयो भवति तदावैराग्यस्यावधिः पराकाष्ठाबोध्या, तथा अहंभावः अहमित्याकारावृत्तिस्तस्या उदयाभावो बोधस्यज्ञानस्य परमावधिः, वृत्तेरन्तःकरणेलीनाया अनुत्पत्तिः पुनरनावि

स्तुसेत्युक्तं ॥ पैङ्गलोपनिषदि निदिध्यासनलक्षणमुक्त्वा तदनन्तरं "ध्यातृध्यानेविहाय निवातस्थितदीपवद्ध्येयैकगोचरं चित्तं समाधिर्भवति तदानीमात्मगोचरावृत्तयस्समुत्थिता अज्ञाताभवन्ति तास्स्मरणादनुमीयन्ते इहाऽनादिसंसारे संचिताः कर्म्मकोटयः अनेनैव विलयंयान्ति ततोभ्यासपाटवात्सहस्रशः सदाऽमृतधारा वर्षति ततोयोगवित्तमास्समाधिं धर्ममेघंप्राहुः वासनाजाले निःशेषममुना प्रविलापिते कर्मसंचये पुण्यपापे समूलोन्मूलिते प्राक्परोक्षमपि करतलामलकवद्वाक्यमप्रतिबद्धापरोक्षसाक्षात्कारं प्रसूयते तदाजीवन्मुक्तो भवतीत्युक्तं ॥ अत्रेदम्बोध्यं सविकल्पसमाधावात्ममात्रध्यानाभ्यासान्नितान्त विध्वस्ततमोरजोमलं चित्तं सत्वमात्रावशेषमतिप्रसन्नं भवति सोयमतिशुद्धचित्तधर्मो ज्ञानरूपःप्रसादोधर्म्ममेघाख्यसविकल्पसमाधेरुत्तरावधिस्तस्यैवफलीभूतस्तदेवपरवैराग्यमित्युच्यते यंमुक्तिहेतुसाक्षात्कारंवदन्ति मोक्षविदः,यस्योदये प्रक्षीणसर्वक्लेशोविधूताशेषकर्म्माशयो भवति, यदनन्तरंच चित्तमसंप्रज्ञातसंस्कारमात्रशेषं भवति, तदभ्यासवशात्तत्संस्कारप्रचयेन संप्रज्ञातसमाधौ ध्येयाकारेणविद्यमानसात्विकवृत्तेः संप्रज्ञातसमाधिप्रज्ञा तज्जसंस्कारप्रवाहस्यच निरोधेसति केवलपरवैराग्यसंस्कारावशेषे चित्ते वृत्तिंविना केवलसच्चिदानन्दस्वरूपमात्रस्फूर्तिमान् समाधिरसंप्रज्ञात इति ॥ तदुक्तं योगशास्त्रे मनसोवृत्तिशून्यस्य ब्रह्माकारतयास्थितिः ॥ याऽसम्प्रज्ञातनामासौ समाधिरभिधीयत इति,उक्तंचेदंपातंजले सू०तस्यापिनिरोधेसर्वनिरोधान्निर्बीजःसमाधिरिति ॥ अन्यत्राऽपि आगमेनानुमानेन

भावः उपरतेर्मर्यादाऽवधिः ॥ ( ध्यातृध्यानेविहायेति ) ततः अमृतधारावर्षित्वात् परोक्षमितिवाक्यविशेषणं परोक्षज्ञानजनकमित्यर्थः ॥ (तस्यापिनिरोध इति ) पातंजलप्रथमपादान्तिमसूत्रमिदम् ॥ परवैराग्यसंस्कारप्रचयेन तस्य संप्रज्ञातसमाधिप्रज्ञासंस्कारस्यापिशब्दात्प्रज्ञायाश्च निरोधेसति सर्वस्य प्रज्ञातज्जसंस्कारप्रवाहस्य निरोधादवसिताधिकारत्वेन चित्तस्यकृत्याभावात् निमित्तापाये नैमित्तिकापाय इतिन्यायेन निर्बीजः समाधिर्भवतीत्यर्थः ॥ ( मणिप्रभा० )

ध्यानाभ्यासरसेनच॥ त्रिधाप्रकल्पयन्प्रज्ञां लभतेयोगमुत्तममिति, श्रवणेन मननेन ध्यानाभ्यासः पुरुषमात्रध्यानाभ्यासः धर्म्ममेघाख्यः समाधिर्भवति तद्रसेनच परवैराग्येण प्रज्ञाप्रसादात्मना परमात्मानं साक्षात्कुर्वन्निर्बीजं योगंलभत इत्यर्थः, अयमेवराजयोगः तदुक्तंस्मृतौ समाधिस्तत्रनिर्बीजो राजयोगःप्रकीर्तितः ॥ दीपवद्राजतेयस्मादात्मासच्चिन्मयःप्रभुरिति ॥ अन्ये येक्रियायोगादयो योगशास्त्रेप्रसिद्धास्ते सर्वेऽस्यसाधनत्वेनैव निर्दिष्टा इतिबोध्यम्॥ अत्र संस्कारमात्रेण विद्यमानचित्तस्य प्रारब्धावसाने लयः, "तस्यतावदेवचिरं यावन्नविमोक्ष्येथसंपत्स्य इतिश्रवणात् प्रारब्धनिराकरणन्तु सिद्धान्तरहस्याभिप्रायेणेति ध्येयं॥ पातंजलेतु सू०भवप्रत्ययोविदेहप्रकृतिलयानामित्यनात्मन्यात्मभावनयापि निर्विकल्पसमाधिरुक्तस्तस्यजन्महेतुत्वात्सोत्र नप्रदर्श्यते, अन्यत्रत्वख

( प्रज्ञाप्रसादात्मनेति ) निरतिशयसत्वोत्कर्षरूपाखण्डाकारवृत्त्यात्मनेत्यर्थः ( तस्यतावदिति ) छा अ० ६ ख० १४ तस्याचार्य्यवतःपण्डितस्य मेधाविनोऽविद्याबन्धनविनिर्मुक्तस्य तावदेव तावानेव कालश्चिरंविलम्बः सत्संपत्तेरितिशेषः कियान् यावत्कालपर्यन्तं नविमोक्ष्ये पुरुषव्यत्ययेन नविमोक्ष्यते प्रारब्धकर्मणोभोगाद्विनाशेन यावद्देहपातो नभवतीतियावत् अथ तदा देहपातसमकालमेव संपत्स्ये संपत्स्यते विदेहमुक्तोभवतीत्यर्थः ॥ ( मि० ) ( भवप्रत्ययइति ) पातंजलप्रथमपादेकोनविंशसूत्रम्, १९ असंप्रज्ञातसमाधिर्द्विविधः भवप्रत्यय उपायप्रत्ययश्च तत्राद्योमुमुक्षुभिर्हेयइत्याह ( भवप्रत्ययइति ) भूतेन्द्रियाणामन्यतमस्मिन्विकारेऽनात्मन्यात्मत्वभावनयादेहपातानन्तरं भूतेन्द्रियेषु लीनाःषट्कौशिकदेहशून्या विदेहाः अव्यक्तमहदहंकारपंचतन्मात्रेषु प्रकृतिष्वात्मत्वभावनया लीनाः प्रकृतिलयाः तेषांचित्तं संस्कारमात्रशेषमित्यसंप्रज्ञातः सतु भवप्रत्ययः भवन्तिजायन्ते अस्यांजंतव इत्यविद्या भवः अनात्मन्यात्मत्वबुद्धिःसप्रत्ययोहेतुर्यस्यसतथा अविद्यामूलोयंयोगोंतत्फलः यदाहवायुः दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिंतकाः ॥ भौतिकास्तुशतंपूर्णं सहस्रंत्वाभिमानिकाः ॥ बौद्धाद्दशसहस्राणि तिष्ठन्ति विगतज्वराः ॥ पूर्णंशतसहस्रंतु तिष्ठन्त्यव्यक्तचिंतकाः ॥ पुरुषंनिर्गुणं प्राप्यकालसंख्यानविद्यत इति, येषांविवेकख्यातिर्नास्ति तेषांचित्तं लीनमप्युत्थाय संसारेपतति सुप्तचित्तवदितिभावः ॥ ( मणिप्रभा० )

ण्डाकारवृत्तेर्ज्ञात्रादित्रिपुटीलयपूर्वकमात्मन्येकीभावेनावस्थानरूप एकः, ब्रह्माकारवृत्तिंविनापि स्वस्फूर्तिकेवलचिद्रूपेणावस्थानात्मको द्वितीयइतिद्वैविध्यमुक्तं ॥ शांडिल्योपनिषदि "अथसमाधिः जीवात्मपरमात्मैक्यावस्था त्रिपुटीरहिता परमानंदस्वरूपा शुद्धचैतन्यात्मिका भवती त्युक्तं ॥ अस्यैव परिपाकोऽसंप्रज्ञात योगो मुक्तिरूप इत्युच्यते ॥ तदुक्तम्पातंजले। तदाद्रष्टुःस्वरूपेऽवस्थानमिति ॥ तदर्थस्तु तदानिरोधकाले निर्विकल्पकसमाधौ चित्तवृत्तीनांनिरिन्धनाग्निवत्स्वकारणेलीनत्वात् द्रष्टुः प्रमातुरन्तःकरणावच्छिन्नस्य स्वरूपे विशेष्ये केवले सच्चिदानन्दरूपे परमात्मनि अवस्थानं कुसुमापायेस्फटिकस्यालौहितस्वस्वरूपइव क्लेशाद्यपाये चित्ताद्यसंक्रमेण कर्तृत्वाद्यभिमाननिवृत्त्याऽभेदेन स्वस्वरूपात्मनावस्थितिरिति ॥ इदंच समाधिद्वयं जीवन्मुक्तानामेव भवतीतिकेचित् ॥ निर्विकल्पकसमाधिस्तु तेषामेवेत्यत्र नकापि शंका, जीवन्मुक्तास्त्वखिलबन्धरहिता ब्रह्मनिष्ठा इतिप्रसिद्धम् "यदासर्वेप्रमुच्यंते कामायेस्यहृदिश्रिताः ॥ अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुत इत्यादिनिगमान्तेषु ॥ उक्तंचभगवतोपदेशसहस्त्रिकायां, सुषुप्तवज्जाग्रतियोनपश्यति द्वयंचपश्यन्नपिचाद्वयत्वतः ॥ तथाचकुर्वन्नपिनिष्क्रियश्चयः सआत्मविन्नान्यइतीहनिश्चयइति ॥ वराहोपनिषदितु "यथास्थितमिदंयस्य व्यवहारवतोयिच ॥ अस्तं

( अथसमारिति ) स्पष्टार्थः ( यदासर्वेप्रमुच्यन्तइति ) व्याख्यातम् ( सुषुप्तवदिति )दशमप्रकरणं,श्लो• १३ जाग्रति विश्वावस्थायां द्वयं द्वैतप्रपंचं प्राग्वासनावशात्पश्यन्नप्युल्लिखन्नपि विशेषतो नपश्यति किंतु सुषुप्तवत्प्रविलीनप्रपंचप्रसगात्मस्वरूपेणैव पश्यतीतियोजना, तत्रहेतुरद्वयत्वतइति द्वैतस्य बाधितत्वादित्यर्थः, तथाच यथा पूर्वस्नानशौचभिक्षाटनादिकुर्वन्नपि निष्क्रियोनिर्धिकारोऽकर्तात्मस्वभावाविर्भावाद्यः एवंविधः स, आत्मवित् विक्षेपदशायामप्यप्रच्युतात्मयाथात्म्यदर्शनवत्वात् ब्रह्मविदामुत्तमोऽयमेव नान्यःशास्त्रार्थज्ञोपि योव्यवहारकाले ज्ञातृत्वकर्तृत्वाद्याभिमानवानित्यर्थः,इतीत्थमिहवेदान्तशास्त्रे विनिश्चयः॥(रामतीर्थ• ) (यथास्थितमिति)इमानिचतुर्थाध्याये ऋभुनामयोगिनोनिदाघमुनिंप्रति वाक्यानि, इदंप्रतीयमानं गिरिनदीसमुद्रादिकं जगत्प्रतिपन्नदेहेन्द्रियव्यवहारेणसहमहाप्रलये

गतंस्थितंव्योम सजीवन्मुक्तउच्यते ॥ नोदेतिनास्तमायातिसुखदुःखेमुखप्रभा ॥ यथाप्राप्तस्थितिर्यस्यसजीवन्मुक्तउच्यते॥योजागर्तिसुषुप्तिस्थो यस्यजाग्रन्नविद्यते॥ यस्यनिर्वासनोबोधःसजीवन्मुक्तउच्यते॥रागद्वेषभयादीनामनुरूपंचरन्नपि ॥ योन्तर्व्योमवदत्यच्छःसजीवन्मुक्तउच्यते ॥ यस्यनाहंकृतोभावो बुद्धिर्यस्यनलिप्यते ॥ कुर्वं

परमेश्वरेणोपसंहृतंसत्स्वरूपोपमर्द्देनास्तंगतं भवति, अत्रतु नतथा किन्तु विद्य तएव देहेन्द्रियव्यवहारो गिरिनद्यादिकंच परमेश्वरेणानुपसंहृतत्वात्, यथापूर्वम वतिष्ठमानं सर्वैरन्यैःप्राणिभिर्विस्पष्टमवलोक्यते जीवन्मुक्तस्य तत्प्रख्यायकधीवृत्त्य भावात्सुषुप्ताविव सर्वमस्तंगतं भवति स्वयंप्रकाशमानचिद्व्योम केवलमवशिष्य ते बद्धस्य सुषुप्तौ तात्कालिकधीवृत्त्यभावसाम्येपि भाविधीवृत्तिबीजस्य सद्भावान्न जीवन्मुक्तत्वं, ( नोदेतीति ) मुखप्रभा हर्षः स्रक्चन्दनसत्कारादिसुखेप्राप्तेपि संसारिणइव हर्षो नोदेति अस्तमयो दैन्यं धनहानिधिक्कारादिदुःखप्राप्तेपि नदीनो भवति इदानींतनस्वप्रयत्नविशेषमन्तरेण प्रारब्धकर्म्मोपादितपूर्वप्रवाहगतभिक्षान्नादिकं यथाप्राप्तं तस्मिन्स्थितिः देहरक्षा समाधिदार्ढ्येन स्रक्चंदनादिप्रतीत्यभावात्,कदाचित् व्युत्थानदशायामापततः प्रतीतावपि विवेकदार्ढ्येन हेयोपादेयबुद्ध्यभावात् हर्षादिराहित्यमुत्पद्यते, ( योजागर्तीति ) चक्षुरादीन्द्रियाणां स्वस्वगोलकेष्ववस्थानेनोपरत्यभावाज्जागर्त्ति मनो वृत्तिरहितत्वात्सुषुप्तिस्थः अतएवेन्द्रियैरर्थोपलब्धिरित्येतस्यजाग्रल्लक्षणस्याभावाज्जाग्रन्नविद्यते सत्यपिबोधे जायमानोब्रह्मवित्वाभिमानादिभिर्भोगार्थोपादितकामादिभिश्च धीदोषो वासनावृत्तिराहित्येनतद्दोषाभावान्निर्वासनत्वं, ( रागेति ) रागानुरूपंभोजनादिप्रवृत्तिः द्वेषानुरूपंबौद्धकापालिकादिभ्योविमुखत्वं भयानुरूपंसर्पव्याघ्रादिभ्योऽपसरणं आदिशब्देन मात्सर्य्यानुरूपमितरयोगिभ्य आधिक्येन समाध्याद्यनुष्ठानं सत्यपिव्युत्थानदशायामीदृश आचरणे पूर्वाभ्यासेन प्रापिते विश्रान्तचित्तस्य कालुष्यरहितत्वादत्यच्छत्वम्,यथा व्योम्निधूमधूलिमेघादियुक्तेपि निर्लेपस्वभावत्वादत्यच्छत्वं तद्वत्, (यस्यनाहमिति)यस्य ब्रह्मविदोभावःसत्तास्वभावः आत्मा नाहंकृतो नाहंकारेणतादात्म्यातिशयादंतर्भावितो बुद्धिलेपो नास्ति यस्य बुद्धिः कर्तृत्वाकर्तृत्वाभिमानाभ्यां नलिप्यते लोके बद्धस्य पुरुषस्य शास्त्रीयं कर्मकुर्वतो अहंकर्तेतिचिदात्माऽहंकृतो भवति स्वर्गंप्राप्स्यामीति हर्षेणबुद्धिर्लिप्यते अकुर्वतस्तु त्यक्तवानस्मीति अहंकृतत्वं स्वर्गालाभविषादादलेपः एवं प्रतिषिद्धकर्माणि लौकिककर्मणिच यथासम्भवं योजनीयम्, जीवन्मुक्तस्यतु तादात्म्याध्यासाभावात् हर्षाद्यभावाच्च नदो

तोऽकुर्वतोवापि सजीवन्मुक्तउच्यते ॥ यस्मान्नोद्विजतेलोको लोका न्नोद्विजतेचयः ॥ हर्षामर्षभयोन्मुक्तः सजीवन्मुक्तउच्यते ॥ यस्सम स्तार्थजालेषुव्यवहार्य्यपिशीतलः॥ परार्थेष्विवपूर्णात्मा सजीवन्मु क्तउच्यते॥प्रजहातियदाकामान्सर्वांश्चित्तगतान्मुने ॥ अक्षुब्धचित्त विश्रान्तःसजीवन्मुक्तउच्यते ॥ चैत्यवर्जिताचिन्मात्रेपदेपरमपावने॥ अक्षुब्धचित्तविश्रान्तःसजीवन्मुक्तउच्यते॥ इदंजगदहंसोयंदृश्यजा तमवास्तवं ॥ यस्यचित्तेनस्फुरति सजी०मुक्तउच्यतइत्युक्तं ॥ किंचा स्य योगस्यसप्तभूमिका अप्युक्तावासिष्ठे ॥ ज्ञानभूमिःशुभेच्छाख्या प्रथमासमुदाहृता ॥ विचारणाद्वितीयास्यात्तृतीयातनुमानसा ॥ स त्वापत्तिश्चतुर्थीस्यात्ततोऽसंसक्तिनामिका ॥ पदार्थाभावनाषष्ठी स प्तमीतुर्य्यगास्मृतेति ॥ अर्थस्तु शुभेच्छाइत्याख्यायस्याःसाशुभे च्छाख्या विवेकवैराग्यशमादिपूर्विकातितीव्रमुमुक्षा ज्ञानस्यावस्था

पद्यं, ( यस्मादिति ) अधिक्षेपताडनादावप्रवृत्तत्वात् तस्माल्लोकोनोद्विजते अत एवेतस्मिन् लोकस्याप्यधिक्षेपाद्यप्रवृत्तेः कस्यचिद्दुष्टस्य तत्प्रवृत्तावपि एतच्चित्ते ता दृशविकल्पानुदयाच्च अयमपिनोद्विजते न बिभेति यतोसौ हर्षामर्षभयहेत्वज्ञा नाभिमानोन्मुक्तः, ( यःसमस्तेति ) परगृहे विवाहोत्सवादौ स्वयंगत्वा तत्प्रीत्यै तदीयकार्येषु व्यवहरन्नपि लाभालाभयोर्हर्षविषादरूपं बुद्धिसंतापं नप्राप्नोति य था एवमयमुक्तस्वकार्येपि शीतलःनकेवलंसंतापाभावाच्छीतलत्वं किंतु पूर्णस्वरू पानुसन्धानादपि ( प्रजहातीति ) हेमुनेचित्तगतान्मनसिस्थितान् कामान् क्षुद्र विषयाभिलाषान् यदा प्रकर्षेणजहाति त्यजति तत्रहेतुस्सर्वात्मके सत्तास्फूर्त्तिप्रद त्वात्सर्वरूपे मयि अस्मच्छब्दबोध्येप्रत्यगभिन्नपरमात्मनि तुष्टो लब्धनिरतिशयान न्दः, ( चैत्येति ) चेतयितुंद्रष्टुं योग्यं चेत्यंदृश्यं तदेव चैत्यं चितसंचेतने चुरादि रात्मनेपदीततःस्वार्थण्यन्तादचोयदितियत् ततःस्वार्थेष्यञ् तेनदृश्येनवर्जितारहिता याचित् तन्मात्रे तदेकरसस्वरूपे परमपावने ज्ञानद्वारा अविद्यामलानिवर्त्तकत्वा च्छोधके पदे स्वरूपे ब्रह्मणि अक्षुब्धेनबहिर्मुखवृत्त्यभावान्निश्चलेन चित्तेन विश्रा न्तः निरतिशयस्वरूपानन्दलाभेन विषयकामनाभावाद्विषयसंपादनार्थश्रमशून्यो यस्सजीवन्मुक्त उच्यतइत्यर्थः॥ ( इदंजगदिति ) इदंजगद्रूपमवास्तवं दृश्यजातं ( अहंसोयमिति ) सःस्थूलत्वानित्यत्वादिधर्मकोयंदेहोहमित्याद्याकारेणयस्यचित्ते स्फुरतीत्यन्वयः, अत्रत्यावहवोमन्त्राःउपशमप्रकरणे अनूदिताः॥ (जीवन्मुक्तिः ०)

प्रथमाकाथिता योगिभिरितिशेषः ॥ विचारणा श्रवणमननात्मिका द्वितीया ॥ अनेकार्थग्राहकंमनो यदासर्वान्बाह्यविषयान्परित्यज्य सदापरमात्माकारवृत्तिप्रवाहवद्भवति तदासूक्ष्मरूपंमनो यस्यांसा तनुमानसा तृतीया ॥ एतास्तिस्रः साधनभूमयः, आसुयोगी साधकइत्युच्यते ॥ एताभिर्भूमिकाभिः प्रसाधितनिर्मलांतःकरणेऽहंब्रह्मास्मीति ब्रह्माकारापरोक्षवृत्तिरूपा सत्वापत्तिसंज्ञिका चतुर्थी ॥ फलात्मिकेयं संप्रज्ञातभूमिः, अस्यांयोगी ब्रह्मविदित्युच्यते ॥ सत्वापत्तिनामिकायां भूमावुपस्थितासुसिद्धिष्वसंसक्तस्यासंसक्तिनामिका पंचमी ॥ योगीत्वस्यां ब्रह्मविद्वर इत्युच्यते, व्युत्थानंत्वस्य स्वयमेव भवति ॥ परब्रह्मातिरिक्तं पदार्थं नभावयतियस्यांसापदार्थाभावनाषष्ठी ॥ योगीत्वस्यां ब्रह्मविद्वरीयानित्युच्यते, व्युत्थानंत्वस्य परतोभवति ॥ तुर्य्यगा तुरीयं कूटस्थं निर्विकारमात्मरूपं गतोयस्यांसा तुर्य्यगा सप्तमी भूमिः स्मृता ॥ तदुक्तमन्नपूर्णोपनिषदि "आनन्दैकघनाकारा सुषुप्तसदृशीस्थितिः तुर्यावस्थोपशान्तासा मुक्तिरेवहिकेवलेति, अस्यांयोगी ब्रह्मविद्वरिष्ठ इत्युच्यते, व्युत्थानंत्वस्य स्वतः परतोवा नभवति ॥ एतास्तिस्रोऽसंप्रज्ञातभूमयः ॥ वराहोपनिषदितुविशेषउक्तः "शुभेच्छा प्रथमाभूमिकाभवति, विचारणाद्वितीया, तनुमानसीतृतीया, सत्वापत्तिस्तुरीया, असंसक्तिःपंचमी, पदर्थाभावनाषष्ठी, तुरीयगासप्तमीति प्रणवात्मिकाभूमिका, अकारोकारमकारार्द्धमात्रात्मिका, स्थूलसूक्ष्मबीजसाक्षिभेदैर्नाकारादयश्चतुर्विधाः, तदवस्था जाग्रत्स्वप्नसुषुप्तितुरीयाः, अकारस्थूलांशे जाग्रद्विश्वः सूक्ष्मांशे तत्तैजसो बीजांशे

(आनन्देति) आनन्दरूपंयदेकं असहायंघनंसांद्रंवस्तुतदाकारासुषुप्तेनसुषुप्त्यासदृशी केवलाज्ञानावच्छेदकान्तःकरणवृत्त्युपाधिरहिततुर्य्यावस्थयोपशान्तायास्थितिः सैव मुक्तिरित्युच्यते (शुभेच्छेति) बीजंकारणं तत्तैजसःजाग्रत्तैजसः तत्प्राज्ञः जाग्रत्प्राज्ञः एवमग्रेपि तच्छब्दैर्जाग्रत्स्वप्नसुषुप्तितुरीयावस्थासु तत्रप्रकृततत्तदवस्थापरामर्शः, तदतीता तमर्धमात्रमप्यतीता सप्तमी नचैवं सप्तम्याभूमिकायाः प्रणवबहि

तत्प्राज्ञः साक्ष्यंशे तत्तुरीयः, उकारस्स्थूलांशे स्वप्नविश्वस्सूक्ष्मांशे तत्तैजसो बीजांशे तत्प्राज्ञस्साक्ष्यंशेतत्तुरीयः, मकारस्स्थूलांशे सुप्तविश्वस्सूक्ष्मांशे तत्तैजसो बीजांशे तत्प्राज्ञस्साक्ष्यंशे तत्तुरीयः, अर्द्धमात्रास्थूलांशे तुरीयविश्वस्सूक्ष्मांशे तत्तैजसो बीजांशे तत्प्राज्ञस्साक्ष्यंशे तुरीयतुरीयः, अकारतुरीयांशःप्रथमद्वितीयतृतीयभूमिकाः, उकारतुरीयांशश्चतुर्थीभूमिका, मकारतुरीयांशःपंचमी, अर्द्धमात्रातुरीयांशःषष्ठी, तदतीतासप्तमी, भूमित्रयेषुविहरन्मुमुक्षुर्भवति, तुरीयभूम्यांविहरन् ब्रह्मविद्भवति, पंचमभूम्यांविहरन् ब्रह्मविद्वरोभवति, षष्ठभूम्यांविहरन्ब्रह्मविद्वरीयान्भवति, सप्तमभूम्यांविहरन्ब्रह्मविद्वरिष्ठोभवतीति ॥ भूमिकासप्तकवर्णनं महोपनिषदि अन्नपूर्णोपनिषदि पंचमाध्यायेच स्पष्टम् ॥ "आत्मक्रीडआत्मरतिःक्रियावानेषब्रह्मविदांवरिष्ठइत्याद्याः श्रुतयोप्यत्रमानं ॥ अस्य निर्विकल्पकयोगस्य यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टौ साधनान्युक्तानि विस्तरेण शांडिल्ययोगतत्वत्रिशिखब्राह्मणयोगचूडामणिवराहदर्शनोपनिषदादिषु, तान्येवात्र संग्रहेण प्रदर्श्यन्ते ॥ तत्र हिंसाऽनृतस्तेयस्त्रीसङ्गपरिग्रहादिभ्यो निषिद्धकर्म्मभ्यो यमयन्ति योगिनो निवर्त्तयन्तीतियमाः, देहकरणकाम्यकर्म्मणो निवर्त्य मोक्षकारणशौचादिनिष्कामकर्म्मणि नियमयन्ति प्रेरयन्तीतिनियमाः, उक्ताश्चपातंजले सू० अहिंसासत्याऽस्तेयब्रह्मचर्य्याऽपरिग्रहायमाः॥ शौचसंतोषतपःस्वाध्याये

भावापत्याप्रणवस्य सकलभूम्यात्मकत्वं प्रणवात्मिकाभूमिकेत्यत्रैवोक्तं विरुद्धयेतेति शङ्क्यम्, तयासहप्रणवस्यस्वकर्मकोल्लंघनकर्तृत्वसम्बन्धेन सम्बद्धत्वमभिप्रेत्यतथोक्तेः, (आत्मक्रीडइति) मुण्डकस्थम्,आत्मन्येवक्रीडायस्य स आत्मक्रीडो नपुत्रकलत्रादिषुक्रीडति आत्मरतिरात्मप्रीतिः क्रीडाबाह्यसाधनसापेक्षा रतिस्तुसाधननिरपेक्षा बाह्यविषयप्रीतिमात्रमितिविशेषः; क्रियावान् ज्ञानध्यानवैराग्यादिक्रियायुक्तः, आत्मरतिक्रियावानिति समासपाठे आत्मनिरतिरेवक्रियातद्युक्तः एषयोगी ब्रह्मविदामध्यात्मनिष्ठानां वरिष्ठो गरिष्ठःश्रेष्ठः; (नारायणी) अतिशयेनउरुर्महान्वरिष्ठःप्रियस्थिरस्फिरेति उरुशब्दस्यवरादेशः ॥ (अहिंसेति) (शौचसन्तोषेति) चेमेद्वितीयपादस्यक्रमेण त्रिंशद्द्वात्रिंशतमेसूत्रे, अहिंसानाम मनोवाक्का

श्वरप्रणिधानानिनियमाइति ॥ अन्यत्रतु अहिंसासत्यमस्तेयं
ब्रह्मचर्य्यंक्षमाधृतिः ॥ दयार्जवं मिताहारः शौचंचैवयमादश ॥
तपःसंतोषमास्तिक्यं दानमीश्वरपूजनं ॥ सिद्धान्तवाक्यश्रवणं
ह्रीर्मतिश्चजपोहुतमितिनियमाश्चदशोक्ताः॥ आस्यतेऽस्मिन्निति अ
नेनेतिचेत्यासनं द्विविधं बाह्यं शारीरं चेति, तत्र चैलाजिनकुशोत्त
रमित्यादिबाह्यं ॥ शारीरंतु पद्मस्वस्तिकादि तथाहि ऊर्वोरुपरि
विन्यस्य सम्यक्पादतलेउभे ॥ अंगुष्ठौचनिबध्नीयाद्धस्ताभ्यांव्यु
त्क्रमेणतु ॥ पद्मासनमितिप्रोक्तं योगिनांहृदयंगमम् ॥ जनूर्वोरन्तरे
सम्यक्कृत्वापादतलेउभे॥ ऋजुकायःसमासीनःस्वस्तिकंतत्प्रचक्षते॥
एकपादंतथैकस्मिन्विन्यसेदूरुणिस्थितं ॥ इतरस्मिंस्तथाचोरुं वी
रासनमितीरितं ॥ योनिस्थानकमङ्घ्रिमूलघटितं कृत्वादृढंविन्य
से न्मेढ्रेपादमथैकमेवहृदये कृत्वाहनुंसुस्थिरं ॥ स्थाणुःसंयमिते
न्द्रियोऽचलदृशा पश्येद्भ्रुवोरन्तरं ह्येतन्मोक्षकपाटभेदजनकं सिद्धा
सनंप्रोच्यते ॥ अस्यमहिमाचोक्तः,चतुराशीतिपीठेषु सिद्धमेवसदा
भ्यसेत्॥द्वासप्ततिसहस्राणां नाडीनांमलशोधनं ॥ आत्मध्यायीमि
ताहारी यावद्द्वादशवत्सरं ॥ सदासिद्धासनाभ्यासाद्योगीनिष्पत्ति

येत्सर्वदासर्वभूतानामपीडनं परःशुक्ल एषधर्म्मः अन्येयमादयः एतस्याएवशुद्ध्यर्थाः
तथाचोक्तं सखल्वयं ब्राह्मणो यथायथाव्रतानि बहूनि समादित्सति तथातथा प्र
मादकृतेभ्योहिंसानिदानेभ्यो निवर्त्तमानस्तामेवाऽवदातरूपामहिंसां करोतीति,सत्यं
परहितार्थंयथार्थकथनं बलाद्रहसिवापरवित्तहरणं स्तेयं तदभावोऽस्तेयं परद्रव्या
स्पृहेत्यर्थः, ब्रह्मचर्य्यमुपस्थसंयमः स्त्रियाःप्रेक्षणालापस्पर्शश्रवणत्यागस्तदङ्गम्, अ
परिग्रहोनाम देहयात्रातिरिक्तभोगसाधनाऽस्वीकारः, एतेपंचयमाः योगस्याविरोधि
हिंसाऽनृतस्तेयस्त्रीसंगपरिग्रहनिरासकत्वेनाङ्गत्वं भजते ॥ शौचं मृज्जलादिकृतं गो
मूत्रयावकादिमेध्याहारकृतंच बाह्यं, आन्तरं मैत्र्यादिभावनया चित्तस्यासूयादिमल
राहित्यं, सन्तोषस्सन्निहितप्राणधारणमात्रहेतुनातुष्टिः, तपोद्वन्द्वसहनं यथायोगंकृ
च्छ्रादिकंच, स्वाध्यायः प्रणवाद्यभ्यासः, ज्ञानतोज्ञानतोवापि यत्करोमिशुभाशुभं ॥
तत्सर्वंत्वयिसंन्यस्तं त्वत्प्रयुक्तःकरोम्यहम् ॥ कर्मणामनसावाचा याचेष्टाममनित्य
शः ॥ केशवाराधनेसास्याज्जन्मजन्मांतरेष्वपीति परमगुरौसर्वकर्मार्पणमीश्वर
प्रणिधानमित्यर्थः ॥ ( अहिंसासत्यमिति ) ( तपःसन्तोषइतिच ) ह्रीर्लज्जा,

माप्नुयादिति ॥ आसनस्थैर्यानन्तरं प्राणायामं कुर्यात्, बाह्यकोष्ठ वायोरन्तर्बहिर्गतिविच्छेदः प्राणापानयोरैक्यलक्षणः प्राणायामः, अयमेवहठयोग इत्युच्यते, तदुक्तं हकारेणतु सूर्योसौ ठकारेणेन्दु रुच्यते ॥ सूर्याचन्द्रमसोरैक्यं हठइत्यभिधीयते ॥ सूर्यचन्द्राख्ययोः प्राणापानयोरैक्यलक्षणः ॥ हठयोगोयोगबीजं प्राणायामःप्रकीर्त्ति तइति, सचतुर्विधः बाह्यवृत्तिरभ्यन्तरवृत्तिस्तम्भवृत्तिस्तुरीयश्चेति, तत्रोदरस्थवायोरेचनेन बहिर्गतस्यबहिरेवधारणं बाह्यवृत्तिःरेचका ख्यः ॥ अन्तःस्थवायोः प्रयत्नविशेषाद्बहिर्गमनं रेचनं ॥ बाह्यव योः पूरणेनान्तर्गतस्यान्तरेव धारणमभ्यन्तरवृत्तिः पूरकाख्यः ॥ बाह्यवायोः प्रयत्नविशेषादन्तरादानं पूरणं ॥ रेचकपूरकाभ्यासेन जितस्यवायोः रेचकपूरकप्रयत्नंविना केवलविधारकप्रयत्नेन सकृ त्कृतेन बाह्याभ्यन्तरविषयानिश्चयंविनैव योगतिविच्छेदः सस्तम्भ वृत्तिः कुम्भकाख्यः ॥ देहेनिरुद्धस्सन् पिपीलिकास्पर्शतुल्येनस्प र्शेनानुमेयोयः स्थूलोवायुर्देहंपूरयति सपूरकः, योहि पूरितोवा युस्तप्तशिलातलनिहितजलबिन्दुवद्देहे संकुचितःसन्सूक्ष्मरूपेण वर्तते सकुम्भकइतितयोर्भेदोद्रष्टव्यः ॥ तुरीयस्तु सूक्ष्मदृष्ट्या प्रा देशवितास्तिहस्तादिपरिमितबाह्यदेशहृदयनाभिचक्राद्याभ्यन्तरदे शविषयपर्य्यालोचनया प्राणवृत्त्यधिकरणनिश्चयपूर्वको यो बहुप्र यत्नसाध्यः प्राणस्य स्तम्भवृत्तिस्सइतिज्ञेयम् ॥ उक्तंचेदंपातंजले सू० बाह्याभ्यन्तरविषयाक्षेपी चतुर्थ इति ॥ अन्यत्रतु प्राणायामो

( हकारेणेति ) हकारेण हठशब्दघटकेन असौ सूर्य उच्यते ठकारेण ताद शेन चन्द्र उच्यते तयोरैक्यं हठशब्दवाच्यमित्यर्थः, ननु तमःप्रकाशवद्विरुद्ध स्वभावयोस्तयोरैक्यस्य दुर्लभत्वात् हठशब्दस्य हुंफडादिवदानर्थक्यम्प्राप्तमत आह ( सूर्येति ) प्राणापानौ सूर्यचन्द्रशब्दाभ्यामत्रविवक्षितौ तयोरैक्यंच प्राण निरोधाज्जायते तदेवच हठयोगशब्देनोच्यते, हठशब्दस्य योगशब्देन कर्मधार य इति नहठशब्दस्यानर्थकत्वप्रसङ्गइतिभावः,ऐक्यलक्षणः प्राणायाम इति सा मानाधिकरण्येन निर्देशस्तु कार्यकारणयोरभेदोपचाराद्बोध्यः, ( योगबीज मिति ) राजयोगस्य कारणमित्यर्थकंहठयोगविशेषणम्, हेतुर्नाकारणंबीजमित्य मराद्बीजशब्दोनित्यंनपुंसकवृत्तिः ( बाह्याभ्यन्तरेति ) द्वितीयपादस्यैकपंचाश

हिद्विविधस्सगर्भोऽगर्भएवच ॥ जपध्यानादिभिर्युक्तं सगर्भंतंविदुर्बुधाः ॥ तदपेतंविगर्भंच प्राणायामंपरेविदुः॥ प्राणंसूर्य्येणचाकृष्य पूरयेदुदरंशनैः ॥ विधिवत्कुम्भकंकृत्वा पुनश्चन्द्रेणरेचयेत् ॥ येन त्यजेत्तेनपीत्वा धारयेदतिरोधतः ॥ रेचयेच्चततोन्येन शनैरेवनवेगतः ॥ प्रातर्मध्यन्दिनेसायमर्द्धरात्रेचकुम्भकान् ॥ शनैरशीतिपर्य्यन्तं चतुर्वारंसमभ्यसेत् ॥ कनीयसिभवेत्स्वेदः कम्पोभवतिमध्यमे ॥ उत्तमेस्थानमाप्नोति ततोवायुंनिरोधयेदिति ॥ योगचूडामण्युपनिषदि "प्रथमेद्वादशामात्रा मध्यमेद्विगुणामता॥उत्तमेत्रिगुणाप्रोक्ता प्राणायामस्यनिर्णयः ॥ अधमेस्वेदजननं कम्पोभवतिम

त्तमंसूत्रम्, प्राणवायोर्बाह्योविषयः नासिकारन्ध्राद्बहिःप्रदेशे प्रादेशावितस्तिहस्तादिपरिमितो निर्वातेनासाग्रे इषीकातूलादिक्रियानुमितो देशः, आभ्यन्तरोविषयश्च हृदयनाभिचक्रादिस्तयोराक्षेपः सूक्ष्मदृष्ट्यापर्य्यालोचनं सयस्य पूर्वकालेऽस्ति सचतुर्थः स्तम्भवृत्तिः, नचास्य कुभकान्तर्भावः शङ्कनीयः, रेचकपूरकयोरभ्यासेन जितस्यबाह्याभ्यन्तर विषयनिश्चयं विनैवसकृत्प्रयत्नमात्रेणस्तम्भवृत्तिः कुम्भकः; तन्निश्चयपूवकस्स्तम्भवृत्तिः बहुप्रयत्नसाध्यस्तुरीयइति वैलक्षण्यात्, इति ( मणिप्रभा० ) ( प्राणायामइति ) सूर्य्येणदक्षनासिकारन्ध्रेण, चंद्रेणवामनासिकारध्रेण ॥ प्राणयामस्य कनिष्ठमध्यमोत्तमभेदेन त्रैविध्यं दर्शयन्नादौकनिष्टं लक्षयति ( कनीयसीति ) प्राणायाममभ्यस्यतस्तदभ्यासपरिपाकवशाद्यतः प्रभृतिप्राणायामकाले शरीरे स्वेदउत्पद्येत तदा कनीयः प्राणायामसिद्धिर्ज्ञेया, अतिशयेनाल्पःकनीयान्, अल्पशब्ददीयसुनियुवाल्पयोःकनन्यतरस्यामितिकनादेशः, द्वितीयंलक्षयति ( कम्पइति ) कनीयः प्राणायामलक्षणप्रादुर्भावानन्तरमपि चिरकालप्राणायामाभ्यासतः मध्यमप्राणायामसिद्धिर्भवति तल्लक्षणं शरीरे कम्पः, तृतीयंलक्षयति ( उत्तमइति ) मध्यमप्राणायामलक्षणप्रादुर्भावानन्तरं उत्तमप्राणायामसिद्धिर्भवति तल्लक्षणन्तुप्राणस्यब्रह्मरध्रप्राप्तिः, यद्वा शरीरव्युत्थानं, तच्च स्थानमाप्नोतीत्यनेनोक्तं, स्थानं वायोः स्थानमाकाशं आप्नोतीत्यर्थः, "उत्तिष्ठत्यन्तिमेइति शाण्डिल्योपनिषद्वचनात्, "उत्थानं वपुषोयस्य, उत्थानजनकश्चेति त्रिशिखब्राह्मणेलिङ्गवचनाभ्यांचायमर्थःसिद्धः, ततःप्राणायामस्यमहाफलकत्वाद्वायुनिरोधःप्राणायामाख्यो मुमुक्षणा कर्त्तव्यः(प्रथमेद्वादशेति)कालवशेन प्राणायामस्य त्रैविध्यपरमिदं, मात्राकालावयवविशेषस्तल्लक्षणस्वरूपमग्रेमूले व्यक्तं,स्वेदाद्यवस्थावशेनतत्त्रैविध्यमाह(अधमेति)

ध्यमे ॥ उत्तमेस्थानमाप्नोति ततोवायुंनिरोधयेदित्युक्तं॥ त्रिशिखब्रा
ह्मणोपनिषदि "प्रातर्मध्यन्दिनेसायमर्द्धरात्रेचकुम्भकान् ॥ शनैर
शीतिपर्य्यन्तं चतुर्वारंसमभ्यसेत्॥एकाहमात्रंकुर्वाणस्सर्वपापैः प्र
मुच्यते॥संवत्सरत्रयादूर्ध्वंप्राणायामपरोनरः॥ योगसिद्धोभवेद्योगी
वायुजिद्विजितेन्द्रियः॥ अल्पाशीस्वल्पनिद्रश्च तेजस्वीबलवान्भवे
त्॥अपमृत्युमपक्रम्य दीर्घमायुरवाप्नुयात्॥ प्रस्वेदजननं यस्य प्रा
णायामस्तुसोऽधमः॥कम्पनंवपुषोयस्य प्राणायामेषुमध्यमः॥उत्था
नंवपुषोयस्य सउत्तमउदाहृतः ॥ प्रथमेव्याधिपापानां नाशःस्या
न्मध्यमेपुनः॥पापरोगमहाव्याधिनाशःस्यादुत्तमेपुनः॥अल्पमूत्रोल्प
विष्ठश्च लघुदेहोमिताशनः ॥ पट्विन्द्रियः पटुमतिःकालत्रयविदात्म
वानित्युक्तम्॥लैङ्गे प्राणायामस्यमानन्तु मात्राद्वादशकंस्मृतम् ॥
नीचोद्वादशमात्रस्तुसकृदुद्घातईरितः ॥ मध्यमस्तुद्विरुद्घातश्चतु
र्विंशतिमात्रकः ॥ मुख्यस्तुयस्त्रिरुद्घातः षट्त्रिंशन्मात्रउच्यते ॥
प्रस्वेदकम्पनोत्थान जनकश्चयथाक्रमं ॥ आनन्दोजायतेचात्र नि
द्राघूर्णस्तथैवच ॥ घूर्णश्चित्तांदोलनं ॥ प्राणेनोत्सर्पमाणेन अपानः
पीडयतेयदा॥गत्वाचोर्ध्वंनिवर्तेत एतदुद्घातलक्षणमिति ॥स्कान्दे,
जानुप्रदक्षिणीकुर्य्यान्नद्रुतं नविलंबितं ॥ प्रदद्याच्छोटिकांयावत्ताव
न्मात्रेतिगीयतइति ॥ उक्तमात्रालक्षणानुसारेण षट्त्रिंशन्मात्राव
च्छिन्नः कालो मुख्यः प्राणायामकाल इतिसिद्धं॥ याज्ञवल्क्यस्तु
अंगुष्ठांगुलिमोक्षंत्रिस्त्रिर्जानुपरिमार्जनं ॥ तालत्रयमपिप्राज्ञामात्रा

( प्रातरिति ) यस्य प्राणायामस्य प्रस्वेदजननं कार्यमितिशेषः, एवमग्रेपि ( प्राणायामेष्विति ) निर्द्धारणेसप्तमीपटूनि समर्थानि इन्द्रियाणि यस्य स पट्विन्द्रियः, आत्मवान् धैर्य्यवान् ॥ ( प्राणायामस्येति ) नीचोधमः उद्घातोत्र वाग्रे व्यक्तः, निद्रा तत्सदृशीमनोवृत्तिः, उत्सर्पमाणेनोर्ध्वंगच्छता ( निवर्त्तेतेति ) प्राणइतिशेषः, ( जानुप्रदक्षिणीति ) जानु इतिद्वितीयैकवचनान्तं क्लीवं प्रदक्षिणीकुर्याद्धस्तेनेतिशेषः, हस्तं जानुनः परितो भ्रामयेदित्यर्थः,प्रदद्यात्कुर्य्यात्, छोटिका मध्यमांगुष्ठविश्लेषणजन्यःशब्दः ( यावदिति ) यावताकालेनेत्यर्थः, तावत् तावान्कालः ॥ ( अङ्गुष्ठेति ) अङ्गुष्ठाङ्गुलिमोक्षःछोटिका तालत्रयं तालोहस्तद्वयपरस्पराभिघातजन्यः शब्दः तत्रयंत्रिवारं तादृशशब्दकरणमित्यर्थः,

संज्ञांप्रचक्षते इत्याह ॥ साहि स्वस्थस्यपुंसः श्वासप्रश्वासाभ्यां मिताभवति, उक्तंचेदंस्कांदे, एकश्वासमयीमात्रा प्राणायामेनिगद्यत इति ॥ व्याख्यातंचेदंयोगचिंतामणौ निद्रावशंगतस्य पुंसो यावताकालेनैकःश्वासो गच्छत्यागच्छतिच तावान्कालः प्राणायामेमात्रेत्युच्यतइति ॥ योगचूडामण्युपनिषदि "एकश्वासमयीमात्रा ऊर्ध्वाधोगगनेगतिः ॥ रेचकः पूरकश्चैव कुम्भकःप्रणवात्मकः ॥ प्राणायामोभवेदेवं मात्राद्वादशसंयुत इत्युक्तं ॥ अत्रेदमनुसंधेयं षष्टिघटिकात्मकाऽहोरात्रे पुरुषाणां प्रतिदिनमुच्छ्वासनिश्वासात्मकाः षट्शताधिकैकविंशतिसहस्त्रीसंख्याकाः (२१६००) श्वासा भवन्ति, षष्ट्युत्तरत्रिशतीसंख्याकैः (३६०) श्वासैरेकाघटिकाभवति, षड्भिःश्वासैरेकंपलंभवति, श्वासार्द्धेनपंचविपलानिभवन्ति, सार्द्धद्वादशमात्रामितेन सार्द्धद्वादशश्वासात्मकेन पंचविपलाधिक पलद्वयावच्छिन्नकालेनैको मुख्यःप्राणायामोभवति, अस्मिन्पक्षे लिङ्गोक्तकनिष्ठप्राणायामस्यैवमुख्यत्वं पूर्वोक्तमात्रापेक्षयेदानीमुक्तमात्रायास्त्रिगुणत्वात्, यद्यप्यत्र द्वादशमात्रामितेन कालेनैको मुख्यःप्राणायामःसिद्ध्यति तथापि वक्ष्यमाणोपनिषद्वाक्येन, धारणा पंचनाडीभिर्ध्यानंस्यात्षष्टिनाडिकं ॥ दिनद्वादशकेनस्यात्समाधिः प्राणसंयमादितिवचनान्तरेणच विरोधपरिहारायार्द्धमात्राधिक्यग्र

(एकश्वासेति) अत्रश्वासपदेनोच्छ्वासनिश्वासौमिलितावुच्येते तथाच सकृदुच्छ्वासनिश्वासौ यावताकालेन भवतस्तावान्कालः प्राणायामवाक्येषु मात्रापदघटितेषु मात्राशब्दवाच्यइत्यर्थः (एकश्वासेति) मात्रा एकश्वासमयी भवति वायोरूर्ध्वगतिरेचकः अधोगतिःपूरकः गगने शरीराभ्यन्तरावच्छिन्ने गगनएव गतिः नतूर्ध्वं नाप्यधः सकुम्भकः, प्रणवात्मकइति त्रयाणामपि विशेषणम्, तत्वंचतदनुसन्धानसहितत्वात्, प्रणवात्मकः प्रणवकारणभूतसोहंशब्दात्मकत्वाद्वा तदुक्तं योगशिखोपनिषदि "हकारेणवहिर्याति सकारेणाविशेत्पुनः ॥ हंसहंसेति मन्त्रोयं सर्वजीवैश्चजप्यते ॥ गुरुवाक्यात्सुषुम्णायांविपरीतोभवेज्जपः ॥ सोहं सोह मिति प्रोक्तो मन्त्रयोगउदाहृत इति, प्रणवस्यतत्कार्यत्वंच, सकारंचहकारंच लोपयित्वा ततःपरं ॥ सन्धिंकुर्यात्पूर्वरूपं तदासौ प्रणवो भवेदित्युक्तरीत्या बोध्यम्, रेचकादिप्राणायामत्रयं एकश्वासात्मकमात्राद्वादशकावच्छिन्नकालावच्छिन्नं भवतीत्यर्थः ॥ (धारणापंचनाडीभिरिति) स्पष्टम् ॥

हणमिति ॥ तथाच यदार्द्धश्वासाधिकपलद्वयपर्य्यन्तं प्राणस्यास्थिरता भवेत्तदा प्राणो ब्रह्मरन्ध्रं प्राप्नोति ॥ यदातु तत्रैव पंचविंशति पलपर्य्यन्तंप्राणस्थैर्यं भवति तदा प्रत्याहारसिद्धिः ॥ यदापुनः पंचघटिकावधितत्रैव तिष्ठतिप्राणस्तदाधारणासिद्धिः ॥ यदातुषष्टि घटिकापर्य्यंतंप्राणस्थैर्यं तदाध्यानसिद्धिः ॥ द्वादशदिनपर्य्यन्तंप्राणस्थैर्येसति समाधिसिद्धिरिति॥ तदुक्तंयोगचूडामण्युपनिषदि "प्राणायामद्विषट्केन प्रत्याहारःप्रकीर्त्तितः॥ प्रत्याहारद्विषट्केन जायतेधारणाशुभा ॥ धारणाद्वादशप्रोक्तं ध्यानंयोगविशारदैः॥ ध्यानद्वादशकेनैवसमाधिरभिधीयते ॥ यत्समाधौपरंज्योतिरनन्तंविश्वतोमुखं ॥ तस्मिन्दृष्टेक्रियाकर्मयातायातोनविद्यतइति ॥ उक्तंचेदंस्कांदे, प्राणायामद्विषट्केन प्रत्याहारउदाहृतः॥ प्रत्याहारद्विषट्केन धारणापरिकीर्तिता ॥ भवेदीश्वरसंप्रीत्यै ध्यानंद्वादशधारणम् ॥ ध्यानद्वादशकेनैव समाधिरभिधीयते ॥ यत्समाधौपरंज्योतिरनन्तंस्वप्रकाशकम् ॥ तस्मिन्दृष्टेक्रियाकाण्डयातायातंनिवर्त्ततइति, योगतत्वोपनिषदिच "धारयेत्पंचघटिकाः सर्वपापैःप्रमुच्यते ॥ तथासमभ्यसेद्ध्यानं घटिकाषष्टिमेवच ॥ वायुंनिरुध्यचाकाशे देवतामिष्टदामिति ॥ सगुणध्यानमेतत्स्यादणिमादिगुणप्रदम् ॥ निर्गुणध्यानयुक्तस्य समाधिश्चततोभवेत् ॥ दिनद्वादशकेनैव समाधिसमवा

(प्राणायामेति) षट्परिमाणमस्यसंघस्येति षट्कः संख्याया संज्ञासंघेतिकन् द्विरस्तःषट्कोद्विषट्कः द्वादशपरिमाणमस्येतिद्वादशःसंघः अत्रस्तोमेडविधिरित्युक्तो डप्रत्ययोऽस्तोमत्वेपि छान्दसव्यत्ययाद्बोध्यः,(ज्योतिरिति) अस्यभातीतिशेषः, क्रियालौकिकी शास्त्रीयाच कर्मपदं तत्साधनकारकषट्कोपलक्षणं पदद्वयमपि स्वार्थापेक्षापरम्, यातं देहत्यागपूर्वकं लोकान्तरगमनं आयातं लोकान्तरात्प्रत्यागत्यदेहधारणं तयोस्समाहारोयातायातः समाहारद्वंद्वेपुंस्त्वंछान्दसं तथाच लब्धात्मनः क्रियाकारकापेक्षा गतागतंच न विद्यत इत्यर्थः ॥(प्राणायामेति)स्पष्टोर्थः द्वादशेसस्य द्वादशवारान्कृतमित्यध्याहारेणार्थः, क्रियाकाण्डं क्रियासमूहस्तच्चयातायातंचअनयोसमाहारःक्रियाकाण्डयातायातं ॥ (धारयेदिति) देवतामिति,प्रतीतिशेषः,तेनदेवतांप्रतिध्यानं समभ्यसेदित्यन्वयः, गुणाःशक्तयः ततस्सगुणध्यानाभ्यासानन्तरं निर्गुणध्यानयुक्तस्य समाधिश्च भवेदित्यन्वयः, कियताकालेन निर्गुणध्यानात्समाधिलाभइत्याकांक्षायां यदा वायुनिरोधपूर्वकं द्वादशदिनपर्यन्तम विच्छिन्नं निर्गुणध्याननिष्ठो भवेत्साधकस्तदा तल्लाभ इत्याह (दिनद्वादशकेनेति)

प्रयात् ॥ वायुंनिरुध्यमेधावी जीवन्मुक्तोभवत्ययम् ॥ समाधिस्सम
तावस्था जीवात्मपरमात्मनोरित्युक्तम्॥इन्द्रियाणि विषयेभ्यःप्राति
लोम्येनाहृियन्तेस्मिन्निति प्रत्याहारः, उक्तंच इन्द्रियाणांविचरतांविष
येषुनिरर्गलम्॥बलादाहरणंतेभ्यःप्रत्याहारोभिधीयतइति, उक्तयमा
दिसाधनपंचकंबहिरङ्गंनिर्विकल्पकस्यान्तरङ्गन्तु वक्ष्यमाणं धारणा
दित्रयमितिध्येयम्, धारणानाम प्राणमनसोरङ्गुष्ठादिचक्रेषु स्थिरी
करणं, इदमप्युक्तम्, अंगुष्ठगुल्फजानूरुसीविनीलिङ्गनाभिषु॥ हृद्
ग्रीवाकण्ठदेशेषु लम्बिकायांततोनसि ॥ भ्रूमध्येमस्तकेमूर्ध्निद्वादशा
न्तेयथाविधि ॥ धारणंप्राणमनसोर्धारणेतिनिगद्यतइति, लम्बिका
तालुमूलं, मस्तकं ललाटकेशयोःसन्धिः, मूर्द्धा तदुपरितालु, द्वाद
शान्तो ब्रह्मरन्ध्रम्, योगतत्वोपनिषदि "धारयेत्तत्रसर्वज्ञमीश्वरं
विश्वतोमुखम् ॥ धारयेत्पंचघटिकावायुवद्व्योमगोभवेत् ॥ मरणंनतु
वायोस्तुभयंभवतियोगिनः ॥ आभ्रूमध्यात्तुमूर्द्धान्तमाकाशस्थानमु
च्यते ॥ व्योमवृत्तंचधूम्रंच हकाराक्षरभासुरम् ॥ आकाशेवायुमारो
प्य हकारोपरिशंकरम्॥ विन्दुरूपंमहादेवंव्योमाकारंसदाशिवम्,
शुद्धस्फटिकसंकाशन्धृतबालेन्दुशेखरम्॥पंचवक्त्रयुतंसौम्यंदशबाहुं
त्रिलोचनं॥सर्वायुधधृताकारंसर्वभूषणभूषितम् ॥ उमार्द्धदेहंवरदंस

समाधिफलमाह ( मेधावीति ) मेधावी ज्ञानवान् समाधपदार्थमाह ( समा
धिरिति ) समतासरूपता ऐक्यमितियावत् ॥ ( इन्द्रियाणामिति ) निरर्गल
मप्रतिबद्धमित्यर्थः, इदंचरतामित्यत्रान्वेति, आहरणंनिवर्त्तनं तेभ्योविषयेभ्यः ॥
( अङ्गुष्ठेति ) सीविनीगुदमेढ्रयोर्मध्यस्थानम्, ( तालुमूलं घंटिकापरपर्यायम्,
तदुपरि तदुपरिभागः ॥ ( धारयेत्तत्रेति ) तत्र भ्रूमध्यस्थितद्विदलपद्म इत्यर्थः
ईश्वरं शिवं धारयेत, प्राणधारणयाध्यायेत् धारणायाःकालमाह ( धारयेदिति )
तत्फलमाह ( वायुवदिति ) नत्वित्यस्य मध्यमणिन्यायेन मरणेभयेचान्वयः, त
थाच भ्रूमध्ये घटिकापंचकं धारणांकुर्वतो योगिनः आकाशगमनं मरणाभावो
वायुजन्यक्लेशाभावश्च जायत इत्यर्थः, ( आभ्रूमध्यादिति ) भ्रूमध्यमारभ्य मूर्द्धपर्यंत
माकाशस्थानं तत्र धूम्रवर्णं हकाराक्षरयुतं वृत्ताकारं व्योम विद्यते तत्र व्योम्नि
प्राणमारोप्य उक्तधूम्रवर्णवृत्तमध्यगतहकाराक्षरोपरि विन्दुरूपतयाविद्यमानंव्यो
माकारं निर्गुणं सदाशिवं ध्यायेत्, अथवा शुद्धस्फटिकमिवश्वेतं चन्द्रमौलिं
पंचवक्त्रं दशभुजं त्रिनेत्रं धृतानिसर्वाणिआयुधानियेनतादृश आकारोदेहोयस्यतं
सर्वाभरणालंकृतं सर्वेषां कारणानां ब्रह्मादीनामपिकारणम् उमापार्वतीअर्द्धदेहः

विकारणकारणम् ॥ आकाशधारणात्तस्यखेचरत्वंभवेद्ध्रुवम्॥यत्रकु त्रस्थितोवापिसुखमत्यन्तमश्नुतइति ॥ विष्णुपुराणे,प्राणायामेनपव नं प्रत्याहारेणचेन्द्रियं ॥ वशीकृत्यततःकुर्याच्चित्तस्थानंशुभाश्रये ॥ मूर्त्तंभगवतोरूपं सर्वोपाश्रयनिस्पृहं ॥ एषावैधारणाज्ञेया यच्चि त्तंतत्रधार्यते ॥ तच्चमूर्त्तंहरेरूपं यादृक्चिन्त्यंनराधिप ॥ तच्छ्रूयता मनाधारे धारणानोपपद्यते ॥ प्रसन्नवदनंचारु पद्मपत्रनिभेक्षणं ॥ सुकपोलंसुविस्तीर्णं ललाटफलकोज्वलं ॥ समकर्णान्तविन्यस्त चारुकुण्डलभूषणं ॥ कम्बुग्रीवंसुविस्तीर्णं श्रीवत्सांकितवक्षसं ॥ वलीत्रिभङ्गिनामग्न नाभिनाचोदरेणवै ॥ प्रलम्बाष्टभुजं विष्णुमथ वापिचतुर्भुजं ॥ सुसंस्थितोरुजङ्घञ्च सुस्थिरांघ्रिकराम्बुजं॥चिन्त येद्ब्रह्मभूतंतं पीतनिर्मलवाससमित्युक्तं ॥ पातंजलेतु देशबन्धश्चित्त स्यधारणेत्युक्तम्, इयमेवधारणा लक्ष्ययोग इत्युच्यते, तदुक्तं यो हिनासादिदेशेषु दृष्टिःपुंसांस्थिराभवेत् ॥ सलक्ष्ययोगआख्यातो योगेश्रद्धाकरःपरइति ॥ ध्यानन्तु प्रयत्नमन्तरैव विजातीयप्रत्य यप्रवाहानन्तरितसजातीयप्रत्ययप्रवाहः, तदुक्तं पातंजले तत्रप्र

अर्द्धशरीरं यस्यतं भक्ताभीष्टदं सगुणंशिवं ध्यायेदित्यर्थः ॥ एतद्धारणाफलमाह (आकाशेति) खेचरत्वमाकाशगामित्वम् ॥ (प्राणायामेनेति) चित्तस्थानंचित्त स्यस्थितिं शुभाश्रये शुभोयआश्रयोविषयोविष्ण्वादिमूर्त्तिस्तत्र तमेवाह (मूर्त्तं मिति) सर्वेयेउपाश्रयाः उपाश्रीयन्तेसेव्यन्तेतेविषयाः तेषु निस्पृहंनिराकांक्षंचित्तं भगवतोवासुदेवस्य मूर्त्तंसावयवंयद्रूपंदेहः तत्र यत् धार्य्यते एषाधारणाज्ञेया अनाधारेआश्रयाभावे समेतुल्यपरिमाणे कर्णयोरन्तयोः कर्णाधोगतरन्ध्रयोर्विन्य स्तेनिहिते चारुणीमनोहरेकुण्डलाख्येभूषणे अलङ्कारोयस्यतं कम्बुःशंखःसइव रेखात्रयाङ्किताग्रीवायस्यतं सुविस्तीर्णं श्रीवत्सनाम्नाचिन्हेनाङ्कितं वक्षोयस्य तं वलय उदरमध्यगतामांसग्रन्थयएवत्रयोभङ्गास्तरङ्गाइवयस्मिंस्तेन तथामग्नानाभि र्यत्रेदृशेनोदरेणोपलक्षितमितिशेषः, प्रलंबादीर्घा अष्टौभुजायस्यतं अष्टभुजमूर्त्ति रुक्ता वाराहीसंहितायां कार्योऽष्टभुजोभगवांश्चतुर्भुजोद्विभुजएववाविष्णुरिति, ऊ रूचजङ्घेचअनयोस्समाहारऊरुजंघं सुसंस्थितं शोभनसंस्थानविशिष्टंयस्यतंब्रह्म भूतं ब्रह्मैवधृतकाठिन्यवत्तांदृग्भूतम् अक्षवलयेक्षमाला अष्टभुजपक्षेऽवशिष्टयो र्भुजयोःपद्मबाणौज्ञेयौ चतुर्भुजत्वे शंखचक्रगदापद्मान्वितं चिन्तयेत्(देशबन्ध इति) तृतीयपादस्यादिमंसूत्रम्, नाभिचक्रहृदयनासाग्रादौदेशे संप्रज्ञातयोगसिद्ध्ये चित्तस्ययोबन्धःस्थिरीकरणं सा धारणेत्यर्थः॥ (तत्रेति) तृतीयपादस्यद्वितीयंसूत्रं,

त्ययैकतानताध्यानं ॥ अयमेवध्यानयोगइत्युच्यते, तदुक्तं विनादेशादिबन्धेन वृत्तिर्याभिमतेस्थिरा ॥ ध्यानयोगोभवेदेषश्चित्तचांचल्यनाशकइति ॥ धारणायां विजातीयवृत्तिपरिहारेयत्नापेक्षाभवति, एकविषयकचित्तवृत्तिप्रवाहरूपेध्यानेतु तन्नास्ति, इतितद्भेदो बोध्यः ॥ समाधिस्तु पूर्वोक्तएव सविकल्पः, अयमत्रविवेकः विजातीयवृत्तिविच्छिन्नाधारणा, तदविच्छिन्नं ध्यातृध्येयध्यनस्फूर्त्तिमद्ध्यानम्, ध्येयमात्रस्फूर्त्तिमान्समाधिः, ध्येयाकारवृत्तिंविना स्वरूपमात्रस्फूर्त्तिमानसंप्रज्ञातोयोगइति, शृणुसोम्यसुखोपायं मन्त्रयोगमनुत्तमम् ॥ नादयोगंचवक्ष्यामि समाधिजनकंशुभम् ॥ षण्णवत्यङ्गुलायामं शरीरमुभयात्मकम् ॥ तिस्रःकोटयोर्द्धकोटिश्च शरीरेनाडयोमताः ॥ तासुमुख्यादशप्रोक्तास्तासुतिस्रोव्यवस्थिताः ॥ प्रधानामेरुदण्डेतु चन्द्रसूर्याग्निरूपकाः ॥ इडावामेस्थितानाडी शुभ्राचन्द्रस्वरूपिणी ॥ शक्तिरूपाचसानाडी साक्षादमृतविग्रहा ॥ दक्षिणेपिङ्गलाख्याता पुंरूपासूर्य्यविग्रहा ॥ दाडिमी

यत्रचित्तंधृवं तत्रप्रत्ययस्यज्ञानस्य वृत्यात्मकस्यैकतानता विसदृशपरिणामानन्तरित सुसदृशपरिणामप्रवाहता ध्यानमित्यर्थः॥ ( शृणुसोम्येति ) षण्णवतेरंगुलीनांसमाहारःषण्णवत्यंगुलं सआयामोऽस्यतत्, उक्तंचशाण्डिल्योपनिषदि "इदंशरीरंषण्णवत्यङ्गुलात्मकंभवतीति, उभयात्मकं अग्नीषोमात्मकं शुक्रशोणितात्मकंवा तासु सार्द्धत्रिकोटिनाडीषु मुख्यादश, तदुक्तंयोगचूडामण्युपनिषदि "भूयस्तासुदशस्मृताः । इडाचापिंगलाचैवसुषुम्णाचतृतीयगा । गान्धारीहस्तिजिव्हाच पूषाचैवयशस्विनी । अलंबुसाकुहूश्चैवशंखिनीदशमीस्मृता । एतन्नाडीमहाचक्रंज्ञातव्यंयोगिभिः सदा । इडावामेस्थिताभागे दक्षिणेपिंगलास्थिता । सुषुम्णामध्यदेशेतु गान्धारीवामचक्षुषि । दक्षिणेहस्तिजिव्हाचपूषाकर्णेचदक्षिणे । यशस्विनीवामकर्णे चाननेचाप्यलंबुसा । कुहूश्चलिंगदेशेतु मूलस्थानेतुशंखिनी । एवंद्वारंसमाश्रित्यतिष्ठन्तेनाडयः क्रमादिति, तासुदशसुनाडीषु तिस्रःप्रधानानाड्यो मेरुदण्डेव्यवस्थिताःमेरुदण्डः पृष्ठमध्यगतंदीर्घमस्थि, ताविशिनष्टि ( चन्द्रसूर्येत्यादिना ) उक्तंचैतच्छाण्डिल्योपनिषदि "तत्रसुषुम्णाविश्वधारिणीमोक्षमार्गेतिचाचक्षते गुदस्यपृष्ठभागेवीणादण्डाश्रिता मूर्द्धपर्यन्तंब्रह्मरन्ध्रेचविज्ञेयाऽव्यक्तासूक्ष्मावैष्णवीभवति सुषुम्णायाः सव्यभागे इडातिष्ठति दक्षिणभागेपिङ्गला इडायांचन्द्रश्चरति पिङ्गलायांरविः तमोरूपश्चन्द्रः रजोरूपोरविः विषभागोरविः अमृतभागश्चन्द्रमाः तावेवसर्वंकालं

कुसुमप्ररुया बलतेजोविवर्द्धिनी ॥ मेरुमध्येस्थितायातु मूलादाब्र ह्मरन्ध्रगा ॥ सर्वतेजोमयीसातु सुषुम्णाबहुरूपिणी ॥ तस्यामध्य गतानाडी चित्राख्यायोगिवल्लभा ॥ ब्रह्मरन्ध्रंविदुस्तस्यां पद्मसूत्र निभंपरं ॥ आधारांश्चविदुस्तत्र मतभेदादनेकधा ॥ केचित्तुद्वादशा धारं षोडशाधारमेवहि ॥ अन्येविदुर्बहुविधं चक्रमाहुःपरेयथा ॥ ततस्तुब्रह्मकेकाले ध्यायेच्चक्रक्रमंसुधीः ॥ ४ ॥ आधारचक्रंप्रथमं १ कुलदीपमनन्तरम् २॥(वज्र) यज्ञचक्रंततःप्रोक्तं ३ स्वाधिष्ठानात्मकं परम् ४ ॥ रौद्रं ५ करालचक्रंच ६ गव्हरात्मकमेवच ७ ॥ विद्या प्रदंच ८ त्रिमुखं ९ त्रिपदं १०कालदण्डकम् ११ ॥ उकारचक्रंच १२ ततःकालद्वारं १३ करङ्ककम् १४॥दीपकं (क्षो) लोभजनक १५ मानन्दललितात्मकम् १६ ॥ मणिपूरकसंज्ञंच १७ नाकुलं १८कालभेदनम्१९ ॥ महोत्साहंच२०परमं । पादकंपदमुच्यते ॥ कल्पजालं ततश्चिन्त्यं । पोषकं । लोलमं ततः ॥ नादावर्तपदं । प्रो क्तंत्रिपुटंच तदुत्तरम् ॥ कंकालकमतश्चक्रं । विख्यातम्पुटभेदनम् ॥

सुषुम्णाकालभोक्त्रीभवति इति, सुषुम्णास्थानादिकमाह ( मेरुमध्यइति ) यातु मेरुमध्ये पृष्ठवंशमध्ये स्थिता आश्रितातदंतर्गतेतियावत् तथाशरीरे गुदालिङ्गान्त राले द्व्यङ्गुलमानेनोच्चं चतुरङ्गुलविस्तृतं वृत्ताकारं त्रिकोणयुतंकन्दं मूलाधारप देनव्यवह्रियते सर्वनाडीमूलानामाधारत्वात् तदेवचदेवदत्तभीमसेनसत्यभामादयो दत्तभीमसत्यादिपदैरिव मूलपदेनोच्यते ततोमूलात् आब्रह्मरन्ध्रगा शिरोदेशस्थि तब्रह्मरन्ध्रपर्यंतमविच्छिन्ना तथासर्वतेजोमयी सूर्य्यादितेजस्थानत्वात् तथाबहुरू पिणी स्ववहनकालेजपकर्त्तॄणाम्बहुरूपफलप्रदत्वात् सानाडीसुषुम्णोच्यते शोभ नंसुम्नंसुखंयोगिनांयस्याः सकाशादितितत्पदव्युत्पत्तिः वैदिकनिघंटौ सुम्नशब्दःसु खपर्य्यायेषु पठितः सुषामादिषुचेतिषत्वं पूर्वपदात्संज्ञायामग इतिणत्वं,तस्याःसु षुम्णाया मध्येचित्रासंज्ञा नाडीवर्त्तते साच योगिवल्लभा तथाहि एतद्द्वाराब्रह्मरन्ध्रा च्च्युतममृतमानन्दहेतुभूतंयोगिनांशरीरेप्रविशति तदितरेषांतुइडापिंगलाद्वाराशरी राद्बहिर्निर्यातिवीर्य्यंपरपर्यायस्यतस्य निर्गमाच्चायुरारोग्यनाशादयोनेकदोषाभवन्ती तिरहस्यम्,तस्यांचित्रानाड्यांपद्मसूत्रनिभं मृणालतन्तुसदृशंपरंसूक्ष्मंब्रह्मरन्ध्रनामकं स्थानमस्ति,इयंचित्रापि मूलाधारेणसम्बद्धास्ति, तत्र चित्राख्यनाड्यांइक्षुवंशादेरि वग्रन्थिसदृशानवयवान्मतभेदादनेकधाअनेकप्रकारेणविदुःजानन्ति, तत्रकेएकएवे ति,परेद्वादश,अपरेषोडश,इतरेबहवइति, तत्रकेषांचिन्मतेनाह (आधारेत्यादिना)

महाग्रन्थिविराकाच । बन्धेज्वलनसंज्ञकम्॥अनाहतंयत्रपुटं । व्योमचक्रं तथाभवेत् ॥ बोधनं । ध्रुवसंज्ञंच । कलाकंदलकं ततः॥ क्रौंचभेरुण्डविभवं । डामरं । कुलपीठकम्॥कुलकोलाहलं । हालावर्तं । चैवमहद्भयम्॥घोराभैरवसंज्ञंच । विशुद्धिःकण्ठमुत्तमं ॥पूर्णकम्पदमारुयात । माज्ञाकाकपुटंतथा॥शृंगाटंकामरूपाख्यं । पूर्णागिर्यात्मकंपरम् ॥ महाव्योमात्मकंचक्रं । शक्तिरूपमनुस्मरेदिति,इत्याद्यामतभेदास्तु तान्त्रिकैस्समुदाहृताः॥वेदेतूक्तंयोगचूडा मण्याद्युपनिषत्सुहि ॥ "षट्चक्रंषोडशाधारंत्रिलक्ष्यंव्योमपंचकम् ॥ स्वदेहेयोनजानाति तस्यसिद्धिःकथंभवेत् ॥ चतुर्दलंस्यादाधारं स्वाधिष्ठानंचषट्दलं ॥ नाभौदशदलंपद्मं हृदयेद्वादशारकं ॥ षोडशारंविशुध्याख्यं भ्रूमध्येद्विदलंतथा ॥ सहस्रदलसंख्यातंब्रह्मरन्ध्रेमहापथे ॥ उक्तंतथायोगशिखोपनिषद्यतिस्तरात् ॥ "गुदमेढ्रान्तरालस्थं मूलाधारत्रिकोणकं ॥ यत्र कुण्डलिनीनाम पराशक्तिः प्रतिष्ठिता ॥

( शक्तिरूपमनुस्मरेदिति ) सहस्रदलाढ्यमितिशेषः ॥ योगचूडामणिवाक्यमुदाहरति ( षट्चक्रेत्यादिना ) षण्णांचक्राणांसमाहारः षट्चक्रं पात्राद्यस्यनेतिङीबभावः, एवमग्रेपि व्योम्नांपंचकंव्योमपंचकं तच्च निर्गुणाकाशं परमाकाशं महाकाशं तत्वाकाशं सूर्याकाशमितिबोध्यम्, तदुक्तं मण्डलब्राह्मणोपनिषदि "अभ्यासान्निर्विकारंगुणरहितमाकाशंभवति, विस्फुरत्तारकाकारगाढतमोपहंपरमाकाशंभवति,कालानलसमद्योतमानंमहाकाशंभवति, सर्वोत्कृष्टपरमद्युतिप्रद्योतमानंतत्वाकाशंभवति,कोटिसूर्यप्रकाशंसूर्याकाशं भवतीति,लक्ष्यत्रयंतुअन्तर्लक्ष्यंवहिर्लक्ष्यं मध्यलक्ष्यंचेति तस्मिन्नेवोपनिषदिस्पष्टम्; षोडशाधारंषट्चक्रंचमूलेव्यक्तम्, पूर्वोक्तान्षट्चक्रान्निर्दिशति ( चतुर्दलमित्यादिना ) चत्वारिदलानि अस्येति चतुर्दलम्पद्ममाधारनामकंस्यात् एवमग्रेपि हृदयंहृदयस्थितमनाहतं चक्रंद्वादशारकमस्ति, शकटस्यचक्रनाभिनेम्योरन्तरालवर्त्तीनि काष्ठान्यराउच्यन्ते तत्सादृश्यात्कमलपत्राणि अराउच्यन्ते द्वादश आराःपत्राणियस्यतत् द्वादशारकं, षोडशारकंकण्ठस्थंचक्रंविशुध्याख्यमस्ति, महापथिप्राणनिर्गमद्वाराश्रेयोहेतुर्वान्मोक्षमार्गे ब्रह्मरन्ध्रेसहस्रसंख्यंदलैः सङ्ख्यातं प्रसिद्धं पद्ममस्ति॥ योगशिखामुदाहरति (गुदमेढ्रेति)मेढ्रोलिंगंगुदमेंढ्रयोमध्येस्थितंउक्तस्वरूपमूलाधारोर्ध्वदेशगतंत्रिकोणकंमण्डलमस्ति यत्र त्रिकोणे कुण्डलिनीनामतदाख्यया प्रसिद्धा पराशक्तिःपरशक्तिभूता

यस्मादुत्पद्यतेवायुर्यस्माद्वन्हिः प्रवर्त्तते ॥ यस्मादुत्पद्यतेहंसोयस्मान्नादः प्रवर्त्तते ॥ यस्मिन्विलीयतेहंसो यस्मादुत्पद्यतेमनः ॥ तदेतत्कामरूपाख्यं पीठंकामफलप्रदं ॥ स्वाधिष्ठानाव्हयंचक्रं लिङ्गमूलेषडस्त्रकम् ॥ नाभिदेशेस्थितंचक्रंदशारंमणिपूरकं ॥ द्वादशारंमहाचक्रं हृदयेचाप्यनाहतं ॥ तदेतत्पूर्णगिर्याख्यं पीठं कमलसम्भव ॥ कण्ठकूपेविशुध्याख्यं यच्चक्रंषोडशास्त्रकम् ॥ पीठंजालन्धरंनाम तिष्ठत्यत्रचतुर्मुख ॥ आज्ञानामभ्रुवोर्मध्येद्विदलंचक्रमुत्तमं ॥ उड्याणाख्यंमहापीठमुपरिष्टात्प्रतिष्ठितं ॥ स्थानान्येतानिदेहेस्मिन् शक्तिरूपंप्रकाशतइति ॥ मूलाधारादिपद्मस्थदलेषुचरतःखलु ॥ जीवस्यफलभेदोयमुक्तोऽध्यात्मविवेकके॥ तद्यथा ॥ गुदलिङ्गांतरेचक्रमाधारन्तुचतुर्दलम् ॥ परमः सहजस्तु

ब्रह्मणोमूर्त्तिःसुताहिसमानाकारा नाडीरूपा प्रतिष्ठितास्ति "अष्टप्रकृतिरूपा अष्टधा कुण्डली कृत्वा कुण्डलिनीशक्तिर्भवतीति शाण्डिल्योपनिषदुक्तेः, मूलप्रकृतिमहत्तत्वाहंकारपंचतन्मात्रात्मिकाष्टप्रकृतिरूपत्वं कुण्डलिन्यामस्तीति तस्याः सकलकार्य्योत्पादकत्वमाधाराधेययोरभेदोपचारेण मूलाधारगतत्रिकोणंदर्शयति (यस्मादुत्पद्यतइत्यादिना) यस्मात्त्रिकोणमण्डलादुत्पद्यते वायुःप्राणः वन्हिः जाठरः हंसः अजपानाममन्त्रो योगिनामुपास्यः, तदुक्तं ध्यानविन्दूपनिषदि "शतानिषट्दिवारात्रं सहस्राण्येकविंशतिः॥ एतत्सङ्ख्यान्वितंमन्त्रं जीवोजपति नित्यशः॥अजपानामगायत्री योगिनांमोक्षदासदा॥अस्याःसंकल्पमात्रेण नरःपापैः प्रमुच्यते॥अनयासदृशीविद्या अनयासदृशोजपः॥अनयासदृशंपुण्यं नभूतंनभविष्यतीति, नादोध्वनिः तदेतत्त्रिकोणं मूलाधारगतं कामरूपाख्यं पीठमुच्यते, आधिभौतिककामरूपपीठन्तु कामरुदेशेत्रिकोणात्मकं कामाक्षादेवीतिप्रसिद्धम्, षडस्रंषट्कोणं मणिपूरकं तत्संज्ञं तदेतदनाहताख्यं चक्रं पूर्णगिरिपीठमित्युच्यते, वाह्यन्तुकुमाउ इतिप्रसिद्धदेशेस्ति, कमलसंभव इतिब्रह्मणः संवोधनं यद्विशुद्धयाख्यं चक्रं तदेवजालंधरंनाम पीठमित्युच्यते, वाह्यतु काङ्गडेतिप्रसिद्धदेशोस्ति, एतेषांपीठत्रयाणामुपरिष्टात् भ्रूमध्ये उड्याणाख्यं महापीठमस्ति, वाह्येतु श्रीजगन्नाथक्षेत्रमितिप्रसिद्धम्, अस्मिन्देहे विद्यमानान्येतानि स्थानानि चत्वारि पीठानि शक्तिरूपं चिच्छक्तेशरीरतया प्रकाशते वहिरपितथैवेतिभावः ॥ अध्यात्मविवेकवाक्यान्युदाहरति (गुदालिंगांतरेति) स्पष्टोर्थः॥ मन्त्रयोगाभ्यासप्रकारम्

हृदानन्दोवीरपूर्वकः॥ योगानन्दश्चतस्यस्यादीशानादिदले फलं ॥ स्वाधिष्ठानंलिङ्गमूले षट्पत्रंचक्रमस्यतु ॥ पूर्वादिषुदलेष्वाहुःफलान्येतान्यनुक्रमात् ॥प्रश्रयःक्रूरतागर्वनाशोमूर्च्छाततःपरम्॥अवज्ञा स्यादविश्वासोजीवस्यचरतोध्रुवम्॥ नाभौदशदलम्पद्मं मणिपूरक संज्ञकम्॥सुषुप्तिरत्रतृष्णास्यादीर्ष्यापिशुनतातथा ॥ लज्जाभयघृणामोहकुधियोऽथविषादिता ॥ क्रमात्पूर्वादिपत्रेषु जीवस्यचरतः फलम् ॥ हृदयेऽनाहतंचक्रं दलैर्द्वादशभिर्युतम् ॥ लौल्यप्रणाशः कपटं वितर्कोप्यनुतापीता ॥आशाप्रकाशश्चिन्ताच समीहासमता ततः ॥ क्रमेणदम्भोवैकल्यं विवेकोहंकृतिस्तथा ॥ फलान्येतानिपूर्वादिदलस्थस्यात्मनोविदुः॥कण्ठेऽस्तिभारतीस्थानं विशुद्धिःषोडशच्छदम् ॥ तत्रप्रणवउद्गीथहुंफट्वषडथस्वधा ॥ स्वाहानमोऽमृतं सप्तस्वराः षड्जादयोमताः ॥ इतिपूर्वादिपत्रस्थे फलान्यात्मनि षोडश ॥ ललनाख्यंघण्टिकायांचक्रंद्वादशपत्रकम् ॥ दमोमानस्ततःस्नेहः शोकःखेदश्चशुद्धता ॥ अरतिःसंभ्रमश्चोर्मिःश्रद्धातोषोऽपराधिता ॥ फलानिललनाचक्रे स्युःपूर्वादिदलेष्विति ॥ भ्रूमध्ये द्विदलंचक्रमाज्ञासंज्ञंफलानिच ॥ आविर्भावःसत्वरजस्तमसांक्रमशोमतः॥ तत्रचास्तिमनश्चक्रं षड्दलंतत्फलानितु ॥ स्वप्नोरसोपयोगश्चघ्राणंरूपोपलम्भनम् ॥ स्पर्शनंशब्दबोधश्चपूर्वादिषुदलेष्विति ॥ ततोपिषोडशदलंसोमचक्रमितीरितम् ॥ दलेषुषोडश स्वस्य कलाः षोडशसंस्थिताः ॥ कृपाथमार्दवन्धैर्यंवैराग्यन्धृति संपदौ ॥ हास्यंरोमांचविनयौध्यानंसुस्थिरताततः॥ गाम्भीर्यमुद्यमःक्षोभमौदार्यैकाग्रतेक्रमात्॥ फलान्युद्यन्तिजीवस्यपूर्वादिदलगामिनः ॥ चक्रंसहस्रपत्रंतुब्रह्मरन्ध्रेसुधाधरम्॥तत्सुधाऽऽसारधाराभिरभिवर्द्धयतेतनुमिति ॥ दिव्यमार्गमिदंप्राहुरमृतानन्दकारणं ॥

शिष्यायोपदिशतिमूलकारः (दिव्यमार्गमिति) इदंवक्ष्यमाणं शरीरान्तर्गतषट्चक्रपूजनात्मकारोहावरोहक्रमाभ्यासरूपमन्त्रयोगज्ञानं दिव्यमार्गं दिवःस्वर्गस्य द्योतनात्मकस्य ब्रह्मणोवा अयंप्रापको दिव्यः सचासौ मार्गस्तम्प्राहुः,दिव्यमार्ग शब्दस्यतत्रप्रवृत्तौ निमित्तमाह (अमृतेति) ब्रह्मरन्ध्रान्निर्गतामृतजन्यानन्दस्य

इच्छाज्ञानक्रियारूपे मूलाधारत्रिकोणके ॥ मध्येस्वयम्भुलिङ्गन्तु कोटिसूर्य्यसमप्रभम् ॥ तदूर्द्ध्वेकामबीजंस्याद्बिन्दुनादकलात्मकम् ॥ तदूर्द्ध्वेविद्युदाकारा कुण्डलीब्रह्मविग्रहा ॥ परिस्फुरतिसर्वात्मा सुप्ताहिसदृशाकृतिः ॥ सर्वमन्त्रस्वरूपान्तां ध्यात्वाचिच्छक्तिरूपिणीं ॥ वादिसांतार्णशोभाढ्यचतुर्द्दलसमन्वितं ॥ हेमवर्णंमूलचक्रं ध्यात्वापत्रेषुवर्णकान् ॥ मध्येचिच्छक्तिमभ्यर्च्य स्वाधिष्ठानेतुतांनयेत् ॥ मूलमाधारषट्कस्य मूलाधारंततोविदुः ॥ लिङ्गमूलेप्रवालाभं वादिलान्तार्णभूषितं ॥ ध्यात्वातुषट्दलंपद्मं पूजांकुर्य्याच्चपूर्ववत् ॥ स्वशब्देनोच्यतेलिङ्गं स्वाधिष्ठानंततोविदुः ॥ तदूर्द्ध्वेनाभिचक्रेतां नीत्वानीलमणिप्रभं ॥ डादिफांतार्णशोभाढ्यदलैर्दशभिरन्वितं ॥ ध्यात्वापद्मदलेष्वर्णान्मध्येचिच्छक्तिमर्च्चयेत् ॥ मणिवद्भ्राजमानत्वान्मणिपूरंतदुच्यते ॥ हृत्पद्मेतांसमानीय चक्रंबालार्कसन्निभम् ॥ कादिठान्तार्णशोभाढ्यैरर्कपत्रैर्विराजितं ॥ तन्मध्येबाणलिंगंच ध्यात्वार्कायुतभासुरं ॥ पूर्वादितोदलेष्वर्णान्मध्येचिच्छक्तिमर्च्चयेत् ॥ शब्दब्रह्मात्मकोनादः श्रूयतेनाहतोयतः ॥ तेनाऽनाहतसंज्ञास्याद्विशुद्धौतांततोनयेत् ॥ कण्ठेविशुद्धिचक्रंस्याद्धूम्राभंषोडशैर्दलैः ॥ स्वराढ्यैरतिशोभाढ्यं ध्यात्वापूजांचपूर्ववत् ॥ विशुद्धिंतनुतेजीवे हंसतत्वावलोकनात् ॥ तस्माद्विशुद्धमित्युक्तं भ्रूमध्येतांततोनयेत् ॥ हक्षाढ्यद्विदलोपेतं चक्रंचन्द्रनिभंस्मरन् ॥ सम्पूज्यविधिवत्तत्र ब्रह्म

कारणमित्यर्थः,त्रिकोणस्यत्रिशक्त्यात्मकत्वमाह ( इच्छेति ) त्रिकोणस्यमध्ये स्वयम्भुलिंगमस्ति लिंगस्योपरिष्टाद्बिंदपेक्षया सूक्ष्मोनादस्तदपेक्षयासूक्ष्माकला।चित्कलाशक्तिरूपा तदुक्तं आसीच्छक्तिस्ततोनादोनादाद्बिन्दुसमुद्भवइति,तदात्मकं तद्घटितं कामबीजं क्लींमितिबीजमस्ति तस्योपरिसुप्ताहिसदृशी तेजोरूपाकुण्डलिनी वर्त्तते तांध्यात्वा वं १ शं २ षं ३ सं ४ इतिचतुर्भिर्वर्णैःस्वाभिमुखदलमारभ्य पूर्वादिक्रमेण संयुक्तैश्चतुर्भिर्दलैःसंयुक्तंसुवर्णवर्णं मूलाधारं ध्यात्वा पत्रेषु चतुर्षूक्तान्वर्णान्ध्यात्वा तत्तद्वर्णान्मानसिकपुष्पैः सम्पूज्य मध्येचिच्छक्तिं स्वेष्टदेवतारूपां कुण्डलिनीं सम्पूज्य स्वाधिष्ठानेचक्रे गुरूपदिष्टमार्गेण तांनयेत्,एवमग्रेप्यर्थोबोध्यः:,मूलाधारपदार्थमाह(मूलमिति)आधारषट्कस्यचक्रषट्कस्ययतोमूलं मूलमिवादिभूतं अतोमूलाधारं विदुः आधाराणां मूलमिवेतिविग्रहः राजदन्तादि

रन्ध्रेनयेच्छिवां ॥ गुर्वाज्ञाक्रमणादस्मिन्नाज्ञाचक्रमुदाहृतम् ॥ सहस्त्राराम्बुजंशुभ्रं ब्रह्मरन्ध्रेप्रकीर्तितं ॥ तत्पद्मकर्णिकामध्ये चन्द्रमण्डलसन्निभम् ॥ सुधाकरंप्रभाकारं बिन्दुरूपंपरात्परं ॥ श्रीगुरुंमनसाध्यत्वा सर्वदेवस्वरूपिणं ॥ सच्चिदानन्दरूपेण तेनदेवेनशम्भुना ॥ सर्वमन्त्रमयींदेवीं चिच्छक्तिंभुवनेश्वरीम् ॥ एकीभूतांविभाव्याथ शृणुयान्नादमुत्तमम् ॥ अयोगिनांदुर्लभन्तं शुत्वैक्यंचस्मरंस्ततः ॥ तदुत्थितामृतंदेवीं पाययित्वातुकुण्डलीम् ॥ विनायकोविधिर्विष्णूरुद्रोजीवोमहेश्वरः ॥ षट्चक्रदेवतास्तत्र संतर्प्यामृतधारया ॥ आनयेत्तेनमार्गेण मूलाधारंततःसुधीः ॥ पुनस्तेनैवमार्गेण द्वादशान्तंनयेच्छिवाम् ॥ शिवेनैक्यंविभाव्याथचिदानन्दस्वरूपिणं ॥ तस्मादानीयहृत्पद्मे ब्रह्मविद्यात्मिकांपरां ॥ ध्यात्वातत्रसुखासीनां स्वाभीष्टदेवतामयीं ॥ संपूज्यध्रुवमायादि बीजमन्त्रंजपेत्स्मरन् ॥ समाधिसिद्धिंसंप्राप्य मुक्तोभवतिनिश्चितं ॥ योगशिखोपनिषदि "मननात्त्राणनाच्चैव मद्रूपस्यावबोधनात्॥मन्त्रमित्युच्यते ब्रह्मन्मदधिष्ठानतोपिवेत्युक्तोमन्त्रशब्दार्थः, मन्त्रजपमात्रेणापिसिद्धिस्तूक्ता

त्वान्मूलशब्दस्य पूर्वंप्रयोगः क्लीबत्वमार्षम्, ध्रुवः प्रणवः, माया तांत्रिकप्रणवः, इत्यादिवीजमन्त्राज्जपेत्, मन्त्रशब्दनिरुक्तिमाह ( मननादिति ) मननात्त्राणनादित्येकानिरुक्तिः, तत्रमननं मंत्रस्यगुरुमुखाज्ज्ञानं, अर्थज्ञानं, इदमवश्यंमच्छ्रेयोहेतुरितिज्ञानं, गुरुमन्त्रदेवतात्मानामैक्यज्ञानम्, जपकालिकंदेवताध्यानं, लक्षणयातत्वज्ञानपूर्वकोजपोवा, मनज्ञाने इतिधातुनिष्पन्नत्वात् त्राणनं रक्षणं त्रैङ्पालने इत्यतःकर्मणिकेनुदविदोंदत्रैति तकारस्यनत्वे ततस्तत्करोतीतिणिचे ततोभावेल्युटासिद्धत्वात्, उभेहेतुपंचम्यौ तेन उक्तरूपमननहेतुकं भयहेतुभ्योनरकादिभ्यो यज्जपकर्तुः पालनं तत्कर्तृत्वान्मंत्रउच्यतेइत्यर्थः, ( मद्रूपस्येति ) द्वितीयानिरुक्तिः, ममपरमात्मनोरूपस्य यदवबोधनं ज्ञापनं तस्मादित्यर्थः, मात्रिगुप्तपरिभाषणे इत्यतःकर्मणिघञ्, यद्वा मन्त्रस्यपालकत्वोपपत्तयेहेतुमाह (मद्रूपेति) स्वजपेनान्तःकरणशुद्ध्युत्पादनद्वारा परमात्मनो मम साक्षात्कारहेतुत्वादित्यर्थः, ( मदधिष्ठानतइति ) तृतीयानिरुक्तिः, मयास्वविग्रहबुध्याऽधिष्ठितत्वादित्यर्थः, तेन मांत्रायते जपध्यानद्वारा तत्फलेन मत्प्रसिद्धिंकरोतीतिव्युत्पत्तिः सूचिता, मयात्राय्यतेशरीरतया अधिष्ठीयते इतिवा, यद्वा मयाऽसंवद्धस्यमन्त्रस्य कथंमद्रूपबोधकत्वमित्याशंकायामुक्तं मदधिष्ठानतइति, अस्मिन्पक्षे अपिवा

मनुना, जप्येनैवतुसंसिध्येद्ब्राह्मणोनात्रसंशयः॥ कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यतइति ॥ ध्यानबिन्दूपनिषदि "ह्रस्वोदहतिपापानि दीर्घःसम्पत्प्रदोऽव्ययः॥ अर्द्धमात्रासमायुक्तःप्रणवोमोक्षदायकइति ॥ तत्रैव "यदिशैलसमंपापं विस्तीर्णंबहुयोजनम् ॥भिद्यते ध्यानयोगेननान्योभेदःकदाचनेति, कैवल्योपनिषदि "उमासहायंपरमेश्वरंविभुंत्रिलोचनंनीलकण्ठंप्रशान्तम् ध्यात्वामुनिर्गच्छतिभूतयोनिंसमस्तसाक्षिंतमसःपरस्तादिति, अस्यार्थःकल्पतरौ सू०अन्तस्तद्धर्मोपदेशादित्यत्र निर्विशेषंपरंब्रह्मसाक्षात्कर्त्तुमनीश्वराः ॥ येमन्दास्तेनुकंप्यंते सविशेषनिरूपणैः॥ वशीकृतेमनस्येषां सगुणब्रह्मशीलनात् ॥ तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनमिति संगृ

शब्दावलंकारार्थौ एवकारार्थौवा ॥ ( जप्येनेति ) द्वितीयाध्यायस्थोयं श्लोकः ८७ । जपजल्पव्यक्तायांवाचि इत्युक्तात् मानसवाचिकोच्चारणार्थाज्जपतेर्बाहुलकात्पोरदुपधादितिभावेक्यपाजप्यशब्दसिद्धिः । ब्राह्मणो जप्येनैव निःसन्देहांसिद्धिं लभते मोक्षप्राप्तियोग्यो भवति अन्यद्वैदिकं यागादिकं करोतु नकरोतु वा यस्मान्मैत्रो मित्रमिव जपमात्रानुष्ठायितया जीवान्तरस्य क्लेशलेशस्याप्यकर्ता पुमान् ब्राह्मणः ब्रह्मणःसम्बन्धी ब्रह्मणिलीयत इत्यागमेषूच्यते मित्रमेवमैत्रः स्वार्थेऽण् क्वचित्स्वार्थिकाःप्रकृतितोलिङ्गवचनान्यतिवर्त्तन्ते इतिपरिभाषणात्पुंस्त्वम्; यागादिषु पशुबीजादिवधान्नसर्वप्राणिप्रियता संभवति तस्माद्यागादिना विनापि प्रणवादिजपनिष्ठो निस्तरतीतिभावः ॥ ( ह्रस्वोदहतीति ) अव्ययः प्रणवः ॥ ध्यानफलमाह ( यदीत्यादिना ) भिनत्तीतिभेदोभेदकः तादृशस्यपापस्य नाशकोध्यानाद्भिन्नो नास्तीत्यर्थः ॥ ( उमासहायमिति ) मुनिर्मननशीलः उमाब्रह्मविद्यासहायोयस्यतं यद्वा उमाभवानीतत्सहितं वामाङ्गस्थितगौरीकत्वात् अर्द्धनारीश्वरकत्वाद्वा त्रीणिसोमसूर्याग्न्यात्मकानिलोचनानियस्यतं त्रिलोचनम्, नीलकण्ठम् विषनिगरणात्कृष्णकण्ठम् तथापि प्रशान्तं प्रसन्नेन्द्रियवदनं प्रभुं समर्थं परमेश्वरं महादेवं ध्यात्वा सजातीयवृत्तिप्रवाहेणसाक्षात्कृत्य भूतयोनिमाकाशादिभूतकारणं तर्हि किंकारणत्वोपाधिकं नेत्याह ( समस्तसाक्षिं ) सर्वबुद्धिप्रचारद्रष्टारं इकारान्तःसाक्षिशब्दश्छान्दसः साक्षित्वमपि नकेवलस्येत्यतआह ( तमसइति ) तमसः आवरणविक्षेपशक्तिरूपायाः अविद्यायाः परस्तात्परमविद्यासम्बन्धशून्यं सदाशिवरूपं ब्रह्मगच्छति प्राप्नोति अन्यध्यानेनपरप्राप्त्ययोगादित्यर्थः ॥ ( वशीकृतइति ) एषांमुमुक्षूणां शीलनं ध्यानं तदेवब्रह्मैव अपेता

हीतः ॥ भगवतापतंजलिनातु बहुधाप्रपंचितं, तस्यवाचकः प्रणवः॥ तज्जपस्तदर्थभावनं ॥ स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥

अपगताउपाधिकल्पनायस्मात्तत् निर्गुणमित्यर्थः ॥ ( तस्यवाचकइति ) एषुसूत्रेषु प्रथमद्वितीयचतुर्थपंचमानि प्रथमपादस्य क्रमेण सप्तविंशाष्टाविंशत्र योविंशैकोनचत्वारिंशानि, तृतीयं द्वितीयपादस्य चतुश्चत्वारिंशं, षष्ठंपंचचत्वारिंशं, ( तस्येति ) तस्यनिरुपाधिकस्येश्वरस्य प्रणव अखण्डोंकारः वाचकः रूढ्याबोधकंनाम संज्ञारूपं अदृष्टविग्रहोदेवो भावग्राह्योमनोमयः ॥ तस्योंकारः स्मृतोनाम तेनाहूतःप्रसीदतीति योगयाज्ञवल्क्यादिस्मृतेः, ऊँतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधःस्मृतइति भगवदुक्तेश्च, अदृष्टविग्रहः अश्रुतशरीरः भावग्राह्यो भक्तिग्राह्यः अतएवमनोमयः कामिनोऽभिलषिताकारः॥ १ ॥ अथवा तस्य स्वेच्छयांगीकृतविग्रहावच्छिन्नस्य ब्रह्मादिमूर्त्तित्रयात्मकत्वेन श्रुतस्येश्वरस्य प्रणवः अश्चउश्चमश्चेत्यकारोकारमकारात्मा अखण्डोंकारः अकारंचउकारंच मकारंच प्रजापतिः ॥ वेदत्रयात्समुद्धृत्य ऊँकारंनिर्ममेपुरेतिमनुनोक्तः, वाचकः प्रत्येकशक्त्याबोधकंनाम यौगिकं "अकारं ब्रह्माणमुकारंविष्णुंमकारंरुद्रमितिश्रुतेः, अत्रप्रतिपाद्यस्येश्वरस्यैकत्वेपि पदार्थतावच्छेदकानांभेदेनद्वन्द्वः तस्यैव प्रातिभासिकभेदेनवाद्वन्द्वः तत्रभेदाभेदयोस्तुमानं "ब्रह्माणमेव विष्णुमेव रुद्रमेव विभक्तांस्त्रीनेवाविभक्तानित्यादिश्रुतिः ॥ २ ॥ अखण्डार्थपक्षेतु तस्यजीवपरयोरभेदरूपाखण्डार्थस्य परमात्मनः प्रणवः अखण्डएवोङ्कारः वाचकः अकारस्य जीवे मकारस्य ब्रह्मणि उकारस्याभेदइति प्रत्येकशक्त्याबोधकंनाम यौगिकमेव; "अकारेणैममात्मानमन्विष्यमकारेणब्रह्मणानुसंदध्यात् उकारेणाविचिकित्सन्नित्यादिश्रुतेः, अत्रसमस्तंव्यस्तंत्वां शरणद गृणात्योमितिपदमितिस्मृतेः; उक्तानांसर्वेषांपक्षाणां युक्तत्वेप्ययंपक्षोयुक्ततमः, "तत्त्वमसीत्यादिमहावाक्यबोधिताभेदस्यलाभात्, तापिन्यादिषु तथैवव्युत्पादनाच्च, ( तज्जपेति ) तस्यप्रणवस्य जपोविधिवदुच्चारणं तदर्थस्यप्रणवार्थस्याचिन्त्यैश्वर्य्यशक्तियुक्तस्य परमात्मनो भावनं प्रकृतितत्कार्य्यपुरुषेभ्योविवेकेनानुसन्धानं, व्यक्ताव्यक्तेचपुरुषस्तिस्रो मात्राः प्रकीर्त्तिताः ॥ अर्द्धमात्रापरंब्रह्मज्ञेयमध्यात्मचिन्तकैरित्यादिगारुडवाक्येभ्यः, यद्वा तदर्थस्य परमात्मनः पूर्णस्य भावनं जीवाभेदेनपुनःपुनश्चेतसिनिवेशनम्, "तमेतमात्मानमोमितिब्रह्मणैकीकृत्य ब्रह्मचात्मनोमित्येकीकुर्य्यादितिश्रुतेः, वस्तुतस्तु अकारेणैममात्मानमान्विष्य मकारेणब्रह्मणानुसंदध्यात् उकारेणाविचिकित्सन्नित्यादिश्रुतेः, तदर्थस्यजीवपरमात्मनोरभेदस्यैतन्मतेद्रव्यगुणयोरिवाविनाभावरूपस्य भावनं चिंतनमित्यर्थः ॥ भावनंच जपपूर्वकं कर्त्तव्यं प्रणवेन परंब्रह्म ध्यायीतनियतोयतिः ॥ जपंश्चप्रणवंनित्यं ब्रह्मविष्णुशिवात्मकं ॥ कोटिसूर्य्यसमंतेजो ध्यायेदात्मनिनिर्मलमित्यादिस्मृतेः ॥ ( स्वाध्यायादिति )

ईश्वरप्रणिधानाद्वा, यथाभिमतध्यानाद्वा, समाधिसिद्धिरीश्वरप्राणि धानादिति, ईश्वरविषयकात्प्रणिधानाद्भक्तिविशेषात्समाधिसिद्धि र्भवतीतिसूत्रार्थः, भजनमन्तःकरणस्य परमात्माकारतापादनरूपं भक्तिरितिभावव्युत्पत्त्याफलीभूताभक्तिरत्रग्राह्या, तस्याएवसमाधि जनकत्वात्सैवप्रेमभक्तियोगइत्युच्यते, तल्लक्षणन्तु प्रेमभक्तियोग स्त्वीश्वरचरणारविन्दविषयकैकान्तिकात्यन्तिकप्रेमप्रवाहोऽविच्छि न्नइत्युक्तं योगसूत्रवृत्तौ श्रीनारायणतीर्थैः ॥ मधुसूदनसरस्वती भिस्तु द्रवीभावपूर्विका मनसोभगवदाकारतारूपा सविकल्पक वृत्तिरित्युक्तं, तैरेव तस्यैवाहंममैवासौ सएवाहमितित्रिधा ॥ भग वच्छरणत्वंस्यात्साधनाभ्यासपाकतइति मृदुमध्याधिमात्रस्वभेदा त्तत्त्रैविध्यमुक्त्वा सत्यपिभेदापगमेनाथ तवाहंनमामकीनस्त्वम् ॥ सामुद्रोहितरङ्गःक्वचनसमुद्रोनतारङ्गः ॥ हस्तमुत्क्षिप्ययातोसि ब लात्कृष्णकिमद्भुतम् ॥ हृदयाद्यदिनिर्यासि पौरुषंगणयामिते ॥ स कलमिदमहंचवासुदेवः परमपुमान्परमेश्वरःसएकः ॥ इतिमतिरच लाभवत्यनन्ते हृदयगतेव्रजतं विहायदूरादिति, त्रयः श्लोकाःक्रमे ण तदुदाहरणतयोक्ताः ॥ शाण्डिल्यस्तु सापरानुरक्तिरीश्वरेइत्यह,

इष्ट देवतामन्त्रादिजपात् स्वेष्टदेवतायाःसंभाषणादिसिध्यतीत्यर्थः ॥ (ईश्वरेति) ईश्वरे कायिकाद्वाचिकान्मानसात्प्रणिधानाद्भक्तिविशेषादासन्नतमः समाधिला भः वाशब्दः पूर्वोक्तोपायेनास्यभक्त्युपायस्य विकल्पार्थः भक्तेरन्यानपेक्षत्वात्, ई श्वरोहिभक्त्याभिमुखःसन् इदमिष्टमस्यास्त्वित्यनुगृह्णातीतिभावः ॥ (यथेति) किंवहुना शिवरामेमादिरूपंपरमेश्वरं वाह्यं चन्द्रसूर्य्यादिज्योतिर्वा यदेवेष्टं त देवध्यायेत् तस्मादपिध्यानाल्लब्धस्थितिकस्य चित्तस्य साधनान्तरंविनापि केव लेपरमात्मनि स्थितियोग्यताभवतीत्यर्थः, यद्वा यथाभिमतानां तीर्थदेवलोकवर्ण तत्वादीनां यथाभिमतेषु स्वदेहादिषु ध्यानाद्भावनाविशेषात् मनसःस्थितिर्भव तीत्यर्थः, तत्र यद्यपि ब्रह्मविदो ब्रह्ममयत्वादिनासर्वमेवतीर्थं प्रतिलोमकूपंच तीर्थानि भवन्ति तथापि युंजानेन चित्तशुध्यर्थं प्रथमतः तीर्थादिकमवश्यंभाव नीयं तत्प्रकारस्तु वराहपुराणादौ द्रष्टव्यः, ग्रन्थविस्तरभयादत्रनलिख्यते ॥ मृदु प्रेमभक्तियोगमुदाहरति ( सत्यपीति ) मध्यमुदाहरति ( हस्तमिति ) अधि मात्रमुदाहरति ( सकलमिदमहंचेति ) ( सापरेति ) इदंद्वितीयसूत्रम्, याईश्वरे

भक्तास्तु सुखस्यैव पुरुषार्थत्वाद्दुःखासम्भिन्ननिरतिशयसुखधारा याः प्रेमभक्तेरेव पुरुषार्थत्वमित्याहुः, भक्तेस्तुरीयपुरुषार्थत्वं पूर्वोदाहृतमहानारायणोपनिषद्वाक्यविरुद्धमितिज्ञेयं, भजतिसेवतेभगवन्तंतदाकारमन्तःकरणंकरोत्यनयेति करणव्युत्पत्त्या श्रवणंकीर्त्तनंविष्णोःस्मरणंपादसेवनं ॥ अर्चनंवन्दनंदास्यं सख्यमात्मनिवेदमिति नवधोक्ता साधनभक्तिरप्यत्र भक्तिशब्दार्थोबोध्यः ॥ शृणिवदानींप्रवक्ष्यामिनादध्यानमनुत्तमम्॥ वायुस्थैर्य्यंभवेद्येन सिद्धयोऽष्टौ भवन्तिच ॥ उक्तंचेदंत्रिपुरासारसमुच्चये विजितोभवतीहतेनवायुः सहजोयस्यसमुत्थितःप्रणादः ॥ अणिमादिगुणाभवन्तितस्यामितपुण्यश्चमहागुणोदयस्येति ॥ सिद्धासनस्थोयोगिन्द्रो वध्वामुद्रांच शाम्भवीं ॥ आमूलाद्ब्रह्मरन्ध्रान्तं शब्दब्रह्मसनातनं॥ शुद्धस्फटिकसंकाशं नादरूपंपरात्परं ॥ परमानन्दविभवं परमात्मपदप्रदं ॥ स्वरूपानन्दजनकं विभाव्यतदनन्तरं ॥ अन्तस्थंदक्षिणेकर्णे शृणुयान्नादमेकधीः॥ उक्तंचतत्रैव आदौमत्तालिमालागलपथविगलत्तारझंकारहारी नादोसौवांशिकस्यानिलभरितलसद्वंशनिस्वानतुल्यः घण्टानादानुकारीतदनुचजलधिध्वानधीरोगभीरो गर्ज्जन्पर्ज्जन्यघो

अनुरक्तिःपरमेश्वरविषयकान्तःकरणवृत्तिविशेषात्मिका भक्तिः सा पराभक्तिरित्यर्थः ॥ ( श्रवणमिति ) विष्णोरितिसर्वप्रथमान्वितम् ॥ नादध्याननिरूपणंप्रतिजानीते ( शृण्विति ) वायुस्थैर्य्यं प्राणनिरोधसामर्थ्यं ॥ सिद्धयः परमाणुतुल्यत्वंअणिमा, विभुत्वंमहिमा, तूलपिण्डवल्लघुत्वंलघिमा, मेरुवद्गुरुत्वंगरिमा, अङ्गुल्याचन्द्रस्पर्शनंप्राप्तिः, सत्यसङ्कल्पत्वंप्राकाम्यं, भूतनियन्तृत्ववशित्वं, भूतस्रष्टृत्वमीशित्वमित्युक्ताः ॥ ( विजितोभवतीति ) यस्ययोगिनः सहजःस्वाभाविकः ब्रह्मनाड्याः प्रणादस्समुत्थितः तेनयोगिना वायुःप्राणो विजितोवशीकृतो भवति किंच महागुणोदयस्य उत्पन्ननादाभिव्यक्तेस्तस्ययोगिनः आणिमादिगुणाः अमितपुण्यंच अपरिच्छिन्नसुकृतं चभवति ॥ ( सिद्धासनस्थइति ) शाम्भवमुद्रालक्षणन्तु अग्रेमूले एव व्यक्तम्भविष्यति ॥ ( आदौमत्तेति ) तत्रैवत्रिपुरासारसमुच्चये एव नादानुसन्धानेप्रवृत्तस्यादौ ब्रह्मनाड्याः सुषुम्णायाः कुहरे रन्ध्रे मत्तभ्रमरपङ्क्तिकण्ठात्प्रादुर्भवन्नत्युच्चो योझङ्कारस्तद्वत् हारि मनोहरोनादो भवति ततो वंशोमुरलीतद्वादनं शीलमस्यसवांशिकस्तस्य मुखवायुनापूरितो यःशोभमानो वंशस्तच्छब्देनतुल्योऽसौनादोभवति ततोघण्टानादसदृशस्ततस्स

षःपरइहकुहरेवर्त्ततेब्रह्मनाडयाइति, ब्रह्मबिन्दूपनिषदि "शब्दब्रह्मणिनिष्णातःपरंब्रह्माधिगछतीत्युक्तं ॥ हंसोपनिषदि "नादमाधाराद्ब्रह्मरन्ध्रपर्यन्तंशुद्धस्फटिकसंकाशं सवैब्रह्मपरमात्मेत्युच्यत इतिनादस्वरूपंप्रदर्श्यतदनन्तरं "हंसइतिद्व्यक्षरमंत्रंप्रकृत्य "तस्यैवजपकोटयानादमनुभवतिसचदशविधउपजायते चिणीतिप्रथमः चिणिचिणीतिद्वितीयः घण्टानादस्तृतीयः शंखनादश्चतुर्थः पंचमस्तन्त्रीनादः षष्ठस्तालनादः सप्तमोवेणुनादःअष्टमोभेरीनादःनवमोमृदंगनादः दशमोमेघनादः नवमंपरित्यज्य दशममेवाभ्यसेत् प्रथमेचिंचिणिगात्रं द्वितीयेगात्रभंजनंतृतीयेखेदनंयातिचतुर्थेकम्पतेशिरः पंचमेस्त्रवतितालु षष्ठेऽमृतनिषेवणम् सप्तमेगूढविज्ञानं परावाचा तथाष्टमे अदृश्यं नवमेदेहंदिव्यंचक्षुस्तथामलं दशमंचपरंब्रह्मभवेद्ब्रह्मात्मसान्निधौतस्मिन्मनोविलीयते मनसिसंकल्पविकल्पे दग्धेपुण्यपापे सदाशिव इत्युक्तम् ॥ अत्रायंसम्प्रदायःहृदयाधोमुखकमलंप्राणायामेनोर्ध्वमुखंकृत्वा तत्रसूर्यमण्डलं द्वादशकलात्मकं जागरितस्थानमकारं तदुपरिचन्द्रमण्डलं षोढशकलात्मकं स्वप्नस्थानमुकारं तदुपरिवह्निमण्डलं दशकलात्मकं सुषुप्तिस्थानंमकारं तदुपरिनादाख्यं तुरीयं ब्रह्म विभावयेदिति ॥ संग्र

मुद्रशब्दइव धीरस्ततो गर्जन्मेघशब्दसदृशो गभीरोनादोभवति ( शब्दब्रह्मणीति ) शब्दोपिब्रह्मप्रापकत्वाद्ब्रह्मतत्रनिष्णातःनादादिरूपेध्यानेन उपनिषदादिरूपे अध्ययनादिना कुशलः परंब्रह्मप्राप्नोतीत्यर्थः ॥ ( तस्यैवजपेति ) तस्य हंसइतिमन्त्रस्यैव जपकोट्या कोटिसंख्यकजपनिवेदनपूर्वकमनोनियमेसति नादंवक्ष्यमाणमनुभवति, सप्रकारांनादोत्पत्तिमाह ( नादइति ) चिण्यादयोऽनुकरणशब्दा इतिशब्दा अनुकरणत्वद्योतकाः ( घण्टानादइति ) घण्टाया नाद इवेत्यर्थः,एवमग्रेपि ( नवमंपरित्यज्येति ) नवमपर्यन्तांस्त्यक्त्वा ब्रह्मभवनफलं दशममेवाभ्यसेत्, दशानांप्रत्येकंलक्षणानि फलानिचाह ( प्रथमइति ) प्रथमे चिणीतिशब्दश्रवणाभ्यासेगात्रं चिंचिणीशब्दवदिवभवति गात्रभञ्जनं गात्र भङ्गइवभवति खेदनं खिन्नइवभवति अमृतनिषेवणं पीतामृत इव भवति अष्टमे परा पराख्यावाचावाक्ज्ञाताभवति वाचेतिटावन्तं वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ आपञ्चैवहलंतानां यथावाचानिशादिशेत्युक्तेः( दशममिति ) दशमंचेदभ्यस्यति परंब्रह्मभवेत् तस्यफलं ( ब्रह्मात्मेति ) ब्रह्मण आत्मसान्निधौ

हीतश्चायमर्थःकालिदासेनापि । आनन्दलक्षणमनाहतनाम्निदेशे नादात्मनापरिणतंतवरूपमीशे ॥ प्रत्यङ्मुखेनमनसापरिचीयमानं शंसन्तिनेत्रसलिलैःपुलकैश्चधन्याइति ॥ अनाहतादौनादाख्ये ब्रह्मणि मनसःसंयमान्नादगताचिदानन्दविषया संविन्मनसःस्थिति हेतुर्भवतीतिभावः, अयमेवब्रह्मयोगइत्युच्यते ॥ फलविशेषस्तुहंसोपनिषद्वाक्येनोदाहृतः ॥ अत्रेदंबोध्यम्, निर्गुणंसगुणंचेतिद्विविधंब्रह्म तत्राद्यंसच्चिदानन्दात्मकं,द्वितीयंशक्त्यात्मकं,तदुक्तं तच्छक्तिभूतःसर्वेशो भिन्नोब्रह्मादिमूर्त्तिभिः ॥ कर्ताभोक्ताचसंहर्तासकलःसजगन्मयइति ॥ अत्रादौसच्चिदानन्दात्मनः स्वरूपभूता चिच्छक्तिःसत्वप्रतिष्ठोच्छूनरूपतयाऽभिव्यक्तापरमाकाशावस्थापन्ना शक्तिशब्दवाच्यापरमात्मनःसकाशात्पार्थक्येन व्यवहारयोग्याभवति १ ततः सैवसत्वप्रतिष्ठा रजोनुविद्धाऽपशावस्थाभिधेया नादशब्दवाच्या पुमान्कालइत्यादिव्यपदेशार्हा भवति २ ततः सैव सत्वप्रतिष्ठा तमोनुविद्धा घनीभावमापन्नाऽव्यक्तावस्थांगता क्रियाप्रधाना बिन्दुशब्दवाच्या भवति ३ तदुक्तम् सच्चिदानन्दविभवात्सकलात्परमेश्वरात्॥ आसीच्छक्तिस्ततोनादोनादाद्बिन्दुसमुद्भवइति ॥ १ ॥ तथा तस्माद्विनिर्गतानित्या सर्वगाविश्वसम्भवेति, तथा नादात्मनाप्रबुद्धासा निरामयपदोन्मुखी ॥ यदाशक्तिस्फुरद्रूपा पुंरूपासातदास्मृतेति,तथा सासत्वसंज्ञाचिन्मात्रज्योतिषःसन्निधेस्तदा ॥ विचिकीर्षुर्घनीभूताक्वचिदभ्येतिबिन्दुतामिति ॥ तथा अभिव्यक्तापराशक्तिरविनाभावलक्षणा॥अखण्डापरचिच्छक्तिर्व्याप्ता

सति आत्माभिन्नत्वेसति तस्मिन्ब्रह्मणिमनोविलीयतेविलीनंभवति मनसिसंकल्पविकल्परूपे विलीने सतीतिशेषः, पुण्यंचपापंचतयोरस्माहारेदग्धेसति सदाशिवो भवतीत्यर्थः॥(आनन्दलक्षणमिति) हेईशेजगत्स्वामिनि धन्याःप्रशस्याःपुमांसःअनाहतनाम्निदेशे हृत्कमलरूपेनादात्मना नादरूपेण परिणतं प्रत्यङ्मुखेन बाह्यविषयेभ्योनिवर्त्य अन्तर्मुखीकृतेनमनसास्वकीयेन परिचीयमानं ध्यानास्पदीक्रियमाणं आनन्दलक्षणं आनन्दस्वरूपंतवरूपंवपुःनेत्रसलिलैरश्रुभिः पुलकेश्चरोमांचैश्चशंसन्ति सूचयन्ति कार्येणकारणानुमानात् त्वद्भक्तानां ध्यानकालेदृश्यमानैः अश्रुपुलकैः असम्भावितान्यहेतुभिस्तद्ध्येयत्वद्वपुष आनन्दरूपतानुमाप्यते इतिभावः ॥

चिद्रूपिणीविभुः ॥ समस्ततत्वभावेन विवर्तेच्छासमन्विता ॥ प्रयातिबिन्दुभावंच क्रियाप्राधान्यलक्षणमितिच ॥ सचाबिन्दुः शिवशक्तितदुभयात्मकविन्दुबीजनादात्मना त्रिधाभिद्यते, तदुक्तम् परशक्तिमयःसाक्षात्त्रिधासौभिद्यतेपुनः ॥ बिन्दुर्नादोबीजमिति तस्य भेदाःसमीरिताः ॥ बिन्दुःशिवात्मकस्तत्र बीजंशक्त्यात्मकंस्मृतम् ॥ तयोर्योगेभवेन्नादस्तेभ्योजातास्त्रिशक्तयः ॥ रौद्रीबिन्दोस्ततोनादाज्ज्येष्ठाबीजादजायत ॥ वामाताभ्यःसमुत्पन्ना रुद्रब्रह्मरमाधिपाः॥ तेज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणइति ॥ अयंभावः सत्वप्रतिष्ठा तमोनुविद्धा बिन्दुशब्दवाच्या चिच्छक्तिस्तमःप्राचुर्यान्निरोधिकाबिन्दुशिवशब्दवाच्या भवति १ सैव सत्वप्राचुर्यादर्धेन्दुबीजशक्तिशब्दवाच्या भवति २ सैव तदुभयसंयोगाद्बिन्दुनादशिवशक्त्युभयात्मकशब्दवाच्या भवति ३ एतौनादबिन्दू पूर्वोक्तनादबिन्दुभ्यामन्यौ तत्कार्यरूपौ,एभ्यस्त्रिभ्यस्तिस्रःशक्तयोजाताः ॥ बिन्दोरौद्री नादाज्ज्येष्ठा बीजाद्वामा ताभ्यःक्रमेण रुद्रब्रह्मरमाधिपा जाताः,तेक्रमेण ज्ञानेच्छाक्रियाशक्तिरूपाःवह्नीन्द्वर्करूपिणश्च शक्तेरेवावस्थाविशेषाः, एषांज्ञानेच्छाक्रियाशक्त्यात्मकत्वं शक्तितउत्पन्नत्वादिति ॥ आद्यबिन्दोरखण्डोनादमात्र सत्वोपाधिकशब्दब्रह्मात्माभवत्, तदुक्तं क्रियाशक्तिप्रधानायाःशब्दशब्दार्थकारणम् ॥ प्रकृतेर्बिन्दुरूपिण्याःशब्दब्रह्माऽभवत्परमिति, तथा भिद्यमानात्पराद्बिन्दोरव्यक्तात्मारवोऽभवत् ॥ शब्दब्रह्मेतितम्प्राहुःसर्वागमविशारदाः॥शब्दब्रह्मेतिशब्दार्थंशब्दमित्यपरेविदुः॥ नहितेषांतयोःसिद्धिर्जडत्वादुभयोरपीति,सचशब्दब्रह्मनशब्दार्थरूपआंतरस्फोटरूपः, नवा शब्दरूपो वाह्यस्फोटरूपः,तयोर्जडत्वेनब्रह्मशब्दानर्हत्वात्, किंतुचैतन्यमेवशब्दब्रह्म,तदुक्तं अनादिनिधनंब्रह्मशब्दतत्त्वंयदक्षरं,विवर्ततेऽर्थभावेन प्रक्रियाजगतोयतइति,तथा चैतन्यंसर्वभूतानां शब्दब्रह्मेतिमेमतिरितिच ॥ बिंदुरूपरवस्यैव सर्वशरीरेषुशब्दत्वेनाविर्भावः, तदुक्तं सोन्तरात्मातदादेवो नादात्मायततेस्वयम् ॥ यथासंस्थानभेदेन सभूयोवर्णतांगतः॥ वायुनाप्रेर्य्यमाणोसौ पिण्डाद्व्यक्तिंप्रयातिहीति ॥ तथा तत्प्राप्यकुण्डलीरूपंप्राणिनांदेहमध्यगं ॥

वर्णात्मनाविर्भवति गद्यपद्यादिभेदतइतिच ॥ शब्दब्रह्मैवमूलाधारेऽभिव्यक्ता परानाम शब्दावस्था, सैवचैतन्यरूपा कुण्डलिनी शक्तिः, सैवस्वाधिष्ठानेपश्यंती, हृदिमध्यमा, वाचिजिह्वायांवैखरीति, तदुक्तं सूक्ष्माकुण्डलिनीमध्ये ज्योतिर्मात्रास्वरूपिणी ॥ अश्रोत्रविषयातस्मादुद्गच्छन्त्यूर्ध्वगामिनी॥ स्वयम्प्रकाशापश्यंतीसुषुम्णामाश्रिताभवेत् ॥ सैवहृत्पङ्कजंप्राप्य मध्यमानादरूपिणी ॥ ततःसंकल्पमात्रास्यादविभक्तोर्ध्वगामिनी ॥ सैवोरःकण्ठतालुस्थाशिरोघ्राणोदरस्थिता,जिह्वामूलोष्ठनिश्वासरूपवर्णपरिग्रहा,शब्दप्रपंचजननी श्रोत्रग्राह्यातुवैखरीति, पराशक्तिरूपत्वात्परा, ज्ञानात्मकत्वात्पश्यंती,मध्यमाबुद्धिर्यस्याःसामध्यमा हिरण्यगर्भस्थानीया, विशेषेणंखरत्वाद्वैखरीविराट्स्थानीयेत्येवंशब्दसृष्टिक्रमइति, शाम्भवीमुद्रातु अन्तर्लक्ष्यमनन्यधीरविरतंपश्यन्मुदासंयमी दृष्ट्युन्मेषनिमेषवर्जितमियंमुद्राभवेच्छांभवी ॥ गुप्तेयंगिरिशेनतन्त्रविदुषातन्त्रेषुतत्वार्थिना मेषास्याद्यमिनांमनोलयकरीमुक्तिप्रदादुर्लभेति,इयमेवशांभवीमुद्राशिवयोगइत्याख्यायते,तदुक्तं नारायणतीर्थकृतयोगसूत्रवृत्तौ,भ्रूमध्यादौज्योतीरूपेपरमात्मनि बहिर्दृष्टिबन्धनेनमनसः संयमात्तत्साक्षिविषयासंविन्मनसःस्थितिहेतुर्भवति अयमेवशिवयोगइति,ततःअन्तर्लक्ष्यावहिर्दृष्टिरितिश्लोकोप्यत्रउदाहृतः,शाम्भवीमुद्रायाविस्तरेण लक्षणंफलंतस्याःखेचर्य्यभेदश्चमण्डलब्राह्मणोपनिषदि शाण्डिल्योपनिषदिचद्रष्टव्यः, अथवान्यप्रका

( शब्दब्रह्मैवमूलाधारइति ) "चत्वारिवाक्परिमितापदानि तानिविदुर्ब्राह्मणायेमनीषिणः गुहात्रीणि निहितानेंगयन्ति तुरीयंवाचोमनुष्यावदंतीतिश्रुतेः शब्दब्रह्मणएव परापश्यन्तीमध्यमावैखरीति चातुर्विध्येन प्रादुर्भावइतिभावः॥ ( अंतर्लक्ष्यमिति ) संयमीयोगीअनन्यधीःसन् अन्तर्हृदयकमलादौ यल्लक्ष्यंसगुणेश्वरमूर्त्यादिकं "तत्वमस्यादिवाक्यलक्ष्यं जीवेश्वराभिन्नमहम्ब्रह्मास्मीतिवाक्यार्थभूतंब्रह्मवा मुदा हर्षेण अविरतं निरन्तरं दृष्ट्युन्मेषनिमेषवर्जितमिति क्रियाविशेषणंपश्यति इयंशाम्भवीमुद्राभवेत् इयंतन्त्रविदुषागिरिशेन तन्त्रेषु गुप्तास्ति एषातत्वार्थिनां यामिनां मनोलयकरी मुक्तिप्रदादुर्लभाच स्यात्, तदुक्तं अन्तर्लक्ष्यावहिर्दृष्टिः निमेषोन्मेषवर्जिता ॥ एषाहिशाम्भवीमुद्रा सर्वतन्त्रेषुगोपितेति ( अथवान्येति )

रेण तदभ्यासक्रमंशृणु ॥ अङ्गुष्ठाभ्यामुभेश्रोत्रे तर्जनीभ्यांचलोच ने ॥ नासारन्ध्रेमध्यमाभ्यामन्याभिर्वदनंदृढं ॥ बध्वापराङ्मुखींमुद्रां शृणुयान्नादमान्तरं ॥ आरम्भाख्याघटाख्याच ततःपरिचयाभिधा ॥ निष्पत्याख्याचतुर्थीति नादावस्थाप्रकीर्त्तिता ॥ प्रथमायांयदाभेदो ब्रह्मग्रन्थेर्भवेत्तदा ॥ आनन्दजनकःक्वाणः श्रूयतेनाहतध्वनिः॥ रोग हीनश्चतेजस्वी रूपलावण्यसंयुतः ॥ नादारम्भेभवेद्योगी वायुपू र्णहृदालयः ॥ द्वितीयायांनादविन्दू तथापानंचमारुतः॥ एकीकृत्य यदाकण्ठे गच्छेदानन्ददोमहान् ॥ अनेकनादसंमर्दो भेरीशब्दश्च जायते ॥ विष्णुग्रन्थेस्तदाभेदो भवेन्नादप्रभावतः ॥ राजयोगेतु प्राणापानौनादविन्दू जीवात्मपरमात्मनोः॥ मिलित्वाघटतेयस्मा त्तस्मात्सघटउच्यतइत्युक्तं ॥ तृतीयायांभ्रुवोर्मध्ये प्राणोयातियदा तदा ॥ रुद्रग्रन्थेर्भवेद्भेदो जायतेमर्द्दलध्वनिः॥ नादानन्दसमाच्छा द्य स्वात्मानन्दःप्रजायते ॥ दोषजन्मजरामृत्युक्षुधानिद्राविवर्ज्जितः॥ ब्रह्मरन्ध्रेगतेप्राणे तुरीयाजायतेतदा ॥ श्रूयतेतत्रनादोहि वीणामु रलिसम्भवः॥ नादेलयंगतंचित्तं राजयोगपदंव्रजेत् ॥ चित्तस्यलय मेवेह राजयोगंवदन्तिहि ॥ इति, निरूपितं चैतद्विस्तरेण योगत त्त्वोपनिषदि सौभाग्यलक्ष्म्युपनिषदिच, वराहोपनिषदितु "आर म्भश्चघटश्चैवतथापरिचयस्तथा॥ निष्पत्तिश्चेतिकथिताश्चतस्रस्त स्यभूमिकाः ॥ कारणत्रयसम्भूतं वाह्यकर्म्मपरित्यजन् ॥ आन्तरंक र्म्मकुरुते यत्रारम्भस्सउच्यते ॥ वायुःपश्चिमतोवेधं कुर्वन्नापूर्य्यसु स्थिरम् ॥ यत्रतिष्ठतिसाप्रोक्ता घटाख्याभूमिकाबुधैः ॥ नसजीवो

अनाहतचक्रविशुद्धिचक्राज्ञाचक्रेषु ग्रन्थयःक्रमेण ब्रह्मविष्णुरुद्रग्रन्थय उच्यन्ते, भेदःस्फोटनं, क्वाणोभूषणशब्दस्तत्सदृशो अनाहतध्वनिः अनाहत देशादुत्पन्नः शब्दः, वायुपूर्णहृदालयः प्राणवायुपूरितहृत्स्थानः, अनेकनादसंमर्द्दः अनेक नादपराभवकर्त्ता, मिलित्वा मेलयित्वा घटते लब्धात्मा भवति, सनादयोगः, मर्द्दलोवाद्यविशेषः, स्वात्मानन्दः स्वात्मस्वरूपभूत आनन्दः प्रजायते प्रादुर्भ वति ॥ ( आरम्भश्चेति ) कारणत्रयं मनोवाक्कायाः ( यत्रेति ) यस्यामवस्थायामि त्यर्थः,एवमग्रेपि, पश्चिमतः सुषुम्णामार्गतः तद्गतविशुद्धिचक्रस्य वेधं भेदनं कु र्वन्, आपूर्य देहमितिशेषः, सुस्थिरंयथास्यात्तथा तिष्ठति, नसजीवः वहिरिन्द्रिय

ननिर्ज्जीवः कायेतिष्ठतिनिश्चलं ॥ यत्रवायुःस्थिरःखेस्यात्सेयंपरि चयभूमिका ॥ यत्रात्मनासृष्टिलयौ जीवन्मुक्तिदशाङ्गतः ॥ सहजः कुरुतेयोगं सेयंनिष्पत्तिभूमिकेति विशेषउक्तः ॥ त्रिपुरासारसमुच्च ये, सुरराजतनूजवैरिरन्ध्रे विनिरुध्यस्वकराङ्गुलिद्वयेन ॥ जलधे रिवधीरनादमन्तः प्रसरन्तं सहसाश्रृणोतिमर्त्त्यइति ॥ अन्यत्र क र्णौपिधायहस्ताभ्यां यंश्रृणोतिध्वनिंमुनिः ॥ तत्रचित्तंस्थिरीकुर्य्या द्यावस्थिरपदंव्रजेदिति, नादविन्दूपनिषदि "सिद्धासनस्थितोयो गीमुद्रांसन्धायशम्भवीम् ॥ शृणुयाद्दक्षिणेकर्णे नादमन्तर्गतंसदा ॥ अभ्यस्यमानोनादोयं बाह्यमावृणुतेध्वनिं ॥ पक्षाद्विक्षेपमखिलं ती र्त्वातुर्य्यपदंव्रजेत् ॥ श्रूयतेप्रथमाभ्यासे नादोनानाविधोमहान् ॥ वर्द्धमानेतथाभ्यासे श्रूयतेसूक्ष्मसूक्ष्मतः ॥ आदौजलधिजीमूतभेरी झर्झरसम्भवाः ॥ मध्येमर्द्दलशङ्खोत्थघण्टकाहलजास्तथा ॥ अन्ते तुकिङ्किणीवंशवीणाभ्रमरनिस्वनाः ॥ इतिनानाविधानादाः श्रूयन्ते देहमध्यगाः ॥ महतिश्रूयमाणेपि मेघभेर्य्यादिकध्वनौ ॥ सूक्ष्मा त्सूक्ष्मतरंतत्र नादमेवपरामृशेत् ॥ घनमुत्सृज्यवासूक्ष्मे सूक्ष्ममु

व्यापाराभावात्, ननिर्ज्जीवः व्युत्थानदर्शनात्, ईदृशोवायुः, तिष्ठतीतिशत्रंतात्स प्तमी निश्चलंयथास्यात्तथातिष्ठति स्थितिंकुर्वाणे काये देहे खे ब्रह्मरन्ध्रे तदवच्छेदेने त्यर्थः, स्थिरः स्यात्, निष्पत्तिभूमिकामाह ( यत्रात्मनेति ) यत्रयस्यामवस्थायां योगीतिशेषः, जीवन्मुक्तिदशाङ्गतः प्राप्तःसन् आत्मना कारणानपेक्षयैव सृष्टि लयौ कुरुते तत्समर्थोभवतीतियावत् तथा सहजोनादस्तु योगराजयोगं कुरुते योगिने ददाति सा निष्पत्तिभूमिकेत्यर्थः ॥ ( सुरराजेति ) सुरराज इन्द्रः तत्त नूजोऽर्जुनः तस्यवैरीकर्णस्तद्वाचकशब्दवाच्यस्य श्रोत्रस्य ये रन्ध्रेछिद्रे द्वितीया द्विवचनान्तमेतत् स्वकरांगुलिद्वयेन विनिरुद्ध्य मर्त्यः अन्तः शरीराभ्यन्तरे प्रस रन्तं जलधेरिवधीरनादं धीरंशब्दं सहसाशीघ्रमेव शृणोति ॥ ( कर्णौपिधायेति ) स्थिरपदं परमात्मस्वरूपं नव्रजेत् तत्रलीनं नभवेदित्यर्थः ॥ ( सिद्धासनेति ) सिद्धासनशाम्भवमुद्रयोर्ल्लक्षणं पूर्वमुक्तं, पक्षात्पञ्चदशभ्योदिनेभ्यो विक्षेपं चि त्तचाञ्चल्यं तीर्त्वा तद्रहितोभूत्वा तुर्यपदं आत्मस्वरूपं, भेरीझर्झरमर्द्दलका हला वाद्यविशेषाः, घनःस्थूलः समुद्रमेघादिशब्दः क्षिप्तंचचलंमनः स्थूलमुत्सृ ज्यसूक्ष्मे सूक्ष्ममुत्सृज्यवास्थूले नादे क्रीडन्तमपि अन्यत्र बाह्यविषयेषु नचा

त्सृज्यवाघने ॥ रममाणमपिक्षिप्तं मनोनान्यत्रचालयेत् ॥ यत्रकुत्रापिवानादे लगतिप्रथमंमनः॥तत्रैवसुस्थिरीभूय तेनसार्द्धंविलीयते॥ विस्मृत्यसकलंबाह्यंनादेदुग्धाम्बुवन्मनः॥ एकीभूयाथसहसाचिदाकाशेविलीयते॥उदासीनःस्थितोभूत्वा सदाभ्यासेनसंयमी ॥ उन्मनीकारकंसद्योनादमेवावधारयेत्॥सर्वंचिन्तांसमुत्सृज्य सर्वचेष्टाविवर्जितः॥ नादमेवानुसन्दध्यान्नादेचित्तंविलीयते॥मकरन्दंपिवन्भृंगो गन्धान्नापेक्षतेयथा॥नादासक्तंतथाचित्तं विषयान्नहिकांक्षते॥मनोमत्तगजेन्द्रस्य विषयोद्यानचारिणः॥नियामनसमर्थोयं निनादोनिशितांङ्कुशः ॥ ब्रह्मप्रणवसंलग्ननादोज्योतिर्मयात्मकः ॥ मनस्तत्रलयंयाति तद्विष्णोः परमंपदम् ॥ तावदाकाशसङ्कल्पो यावच्छब्दः प्रवर्त्तते ॥ निःशब्दंतत्परंब्रह्म परमात्मासमीर्यते ॥ सदानादानुस

लयेत्, मनःप्रथमं यस्मिन्कस्मिंश्चित्घनेसूक्ष्मेवानादे मनोलगति लग्नंभवति तास्मिन्नेवनादे सुस्थिरीभूय सम्यक्स्थिरंभूत्वा तेननादेन सहैवात्मनि लीयते लीनंभवति,मनः सकलंवाह्यं विस्मृत्य दुग्धाम्बुवत् दुग्धेयथाजलमेकीभवति तथा नादेन सहैकीभूय चिदाकाशे प्रत्यगात्मनि विलीयते, उदासीनःलौकिकव्यापारादुपरतः,अभ्यासः पौनःपुन्येनानुष्ठानं, उन्मनी मनसोलयोत्तरकाला तुरीयावस्था तत्कारकं तदुत्पादकं नादमेवावधारयेत् जानीयत्,नान्यत्साधनांतरं, सर्वंचिंतां समस्तसाधनान्तराचिन्तां समुत्सृज्य नादमेवानुसंदध्यात् शृणयात्, उक्तंचैतदभियुक्तैः श्रीआदिनाथेनसपादकोटि लयप्रकाराःकथिताजयन्ति ॥ नादानुसन्धानकमेकमेव मन्यामहे मुख्यतमंलयानामिति,विषयःशब्दादिरेवोद्यानं वनं तत्रचारतीतिविषयोद्यानचारी तस्यमनएव मत्तगजेन्द्रः दुर्निवारत्वात् तस्यनिनादो नादस्तद्रूपोनिशितांकुशस्तीक्ष्णःसृणिः नियमने विषयेभ्यःपरावर्तने समर्थः, ब्रह्मप्रणवः ब्रह्मालम्बनभूतोयःप्रणवः ओंकारो मायावीजंवा तेन संलग्नोयोनादोऽनाहतध्वनिः स ज्योतिर्मयं स्वप्रकाशंब्रह्म तदात्मकः, तदभिव्यञ्जकत्वात्तत्र तदभिव्यङ्ग्ये परमात्मनि मनोलयं याति तन्मनोलयस्थानमेव विष्णोः परिपूर्णस्य परमात्मनः परमं पुनरावृत्तिरहितं पदं स्वरूपं, आकाशसंकल्पः आकाशादिप्रपञ्चकल्पनातावद्भवति यावच्छब्दोनादः प्रवर्त्तते निःशब्दं मनःसहितस्यनादस्य लयस्थानं यद्वस्तु तत्परंब्रह्मेति परमात्मेतिच समीर्यते उच्यते,उक्तंच यत्किंचिन्नादरूपेण श्रूयतेशक्तिरेवसा ॥ यस्तत्वांतोनिराकारः सएवपरमेश्वर

न्धानात् संक्षीणावासनातुया ॥ निरंजनेविलीयेते मनोवायूनसंश यः ॥ इति, इदंरहस्यंपरमं तवस्नेहान्मयोदितं ॥ नप्रकाश्यंत्वया वत्स यस्यकस्याग्रतःक्वचित् ॥ शिष्यउवाच स्वामिन्नमस्तेनतलोक बन्धोभवत्प्रसादात्कृतसर्वकृत्यः ॥ दुखार्णवाद्येनसमुद्धृतोहं भूयोपि तस्मैप्रणतिर्ममास्तु ॥ निर्गुणं निष्क्रियं नित्यं निर्द्वन्द्वं यन्निराम यं॥शुद्धं बुद्धं तथामुक्तं तद्ब्रह्माद्वयमस्म्यहं ॥ गुरुरुवाच नहीह लाभोभ्यधिकोस्तिकश्चन स्वरूपलाभात्स इतो हि नान्यतः ॥

इति, तत्वानामन्तोलयोयस्मिन्सतत्वान्तः, यातु अनेकजन्मानुभवसिद्धा वास ना सा नादानुसन्धानात्संक्षीणा भवति मनोवायू चित्तप्राणौ निरञ्जने नि र्विशेषे परमात्मनि विलीयेते अमनोविवर्त्ताधिष्ठानत्वादिति सर्वेष्टसिद्धिः ॥ ब्रह्मविद्यां ससाधनां श्रुतिस्मृत्यादिभिरुपदिश्य तस्यगोप्यतामाह ( इदंरहस्यमि ति ) यस्यकस्यानधिकारिणः ॥ शिष्यःश्रुतार्थानुसन्धानेन स्वकृतार्थतांप्रकाशय न् प्रणमति ( स्वामिन्निति ) नताःप्रणतायेलोकास्तेषांवन्धुवत्पालक हेस्वामि न् स्वमात्मीयमस्यास्तीतिस्वामी स्वशब्दादामिनिच् स्वामिन्नैश्वर्येइतिसूत्रेण नि पातितोयं अनेन स्वस्यामूल्यब्रह्मविद्योपदेशमूल्येनाहं क्रीतइति सूचितं, तेतुभ्यं नमःप्रणतिरस्तु भवत्प्रसादात्तत्पूर्वकादुष्कररहस्योपदेशात् कृतानिसर्वाणिकृत्या निकर्त्तव्यानियेनसः ईदृशोस्मि ब्रह्मविद्यायांसर्वफलानामन्तर्भावात्, कृतकृत्यत्वे हेतुंवदन् पुनर्नमति अहमनाथःयेन दुखार्णवाज्जन्ममरणारूपदुखसमुद्रात्समुद्धृतः समुत्तारितो ब्रह्मविद्योपदेशपोतेन तस्मै ते भूयः पुनर्मम प्रणतिरस्तु ॥ स्वानुभव मभिनयति ( निर्गुणमिति ) गुरुः स्वोक्तेस्वोपादिष्टार्थस्ययस्मैकस्मैचिदप्रका श्यत्वे श्रीभगवत्पादकृतोपदेश सहस्रिकाषोडशप्रकरणान्तिमपद्यं प्रमाणयति ( नहीहेति ) स्वरूपं आत्मतत्वं लभ्यतेअनेनेतिस्वरूपलाभस्तत्वज्ञानं तस्मा दभ्यधिको लाभः कश्चन कोपीह देवमनुष्यादिभवपरंपरायां नास्ति आत्म लाभान्नपरंविद्यत इतिस्मृतेः, सलाभः इत एव वेदान्तवाक्याद्नान्यतोन्यस्मा च्छास्त्रान्तराद्भवति हि यस्मात्तस्माद्यत्नतः शिष्यमपरीक्ष्य स्वरूपलाभं तत्व ज्ञानं नदेयं ऐन्द्रादपि राज्यतो राज्यादधिकमितिविशेषणेन "प्रणाय्यायचान्ते वासिने नान्यस्मैकस्मैचन यद्यप्यस्माइमामद्भिःपरिगृहीतां धनपूर्णां दद्यादेतदेव ततोभूय इतिश्रुतिंप्रमाणयति उक्तश्चेषोर्थऋग्भिरपि "विद्याहवैब्राह्मणमाजगाम गोपायमाशेवधिष्टेहमस्मि असूयकायानृजवेऽयताय नमाब्रूयावीर्यवतीतथास्यां ॥ यआतृणत्त्यवितथेनकर्णावदुःखंकुर्वन्नमृतंसम्प्रयच्छन् तंमन्येतपितरंमातरञ्च

नदेयमैन्द्राद्पिराज्यतोधिकं स्वरूपलाभंत्वपरीक्ष्ययत्नतः ॥

तस्मैनद्रुह्येत् कतमच्चनाह ॥ अध्यापितायेगुरुंनाद्रियन्ते विप्रावाचामनसाकर्म्मणा वा यथैवतेनगुरोर्भोजनीयास्तथैवतान्नभुनक्तिश्रुतंतत् ॥ यमेवविद्याःशुचिमप्रमत्तं मेधाविनंब्रह्मचर्य्योपपन्नं यस्तेनद्रुह्येत् कतमच्चनाहतस्मैमाब्रूयानिधिपायब्रह्मन्निति निधिःशेवधिरति ॥ आसामृचामयमर्थः ( विद्येति ) विद्या विद्याभिमानिनोदेवता हइतिप्रसिद्धौ वैनिश्चये ब्राह्मणं उपदेष्टारमाचार्यं कंचित् प्रति आजगाम आगत्यचैवम्प्रार्थयामास हेब्राह्मण मा मां गोपाय रक्ष गुपूरक्षणेलोट् त्वद्रक्षयामेकिंफलमतआह अहंतेशेवधिर्निधिस्तद्वत्सुखहेतुरस्मि किंरूपंतेरक्षणमित्यतआह असूयकाय असूया गुणेषुदोषारोपस्तत्कर्त्रे अनृजवे मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनाम् । मनस्येकंवचस्येकंकर्मण्येकंमहात्मनामितिपद्योक्ताय मनोवाग्देहेषु विषमप्रवृत्तये अयताय शास्त्रोक्तवर्णाश्रमनियमरहिताय पुंसे त्वं मां नब्रूयाः तादृशंनपाठयेत्यर्थः,एतेनेदृशपुंसोमदपाठनमेवमद्रक्षणमितिसूचितम्,तवानेनाकिम्भविष्यतीत्यतआह तथा मयिरक्षितायामहंवीर्यवती स्याम् तुभ्यंकर्मानुष्ठानपूर्णफलदानसामर्थ्यवतीभवेयम् अस्तेर्हेतुहेतुमतोरितिभविष्यतिलिङ् ॥ १ ॥ पूर्वमन्त्रणआचार्य्यस्यनियममभिधायद्वितीयेनशिष्यस्यनियममाह ( यआतृणत्तीति ) वितथं अनृतं लौकिकंवाक्यं तद्विपरीतंसत्यंवेदवाक्यं तादृशेन वाक्येन य आचार्यः शिष्यस्यकर्णौसर्वदा पूरयति सर्वदावेदंयःश्रावयतीत्यर्थः,उतृदिर्हिंसानादरयोरित्यस्योपसर्गवशाद्धातूनामनेकार्थत्वाच्चपूर्णेवृत्तिरितिमाधवः, दुर्गस्तुनिरुक्तवृत्तौ आतृणत्ति आभिनत्ति अपिहितावविवसन्तौ कर्णौ विवृणोति वेदश्रवणात्पूर्वंकर्णफलस्याभावेनाविवृतप्रायत्वादित्यर्थः इत्याह, किंकुर्वन् अदुःखंकुर्वन् मन्दप्रज्ञस्यमाणवकस्य ऋचमर्द्धर्चंवा ग्रहीतुमशक्तस्य यथादुःखंनभवति तथापादं पादैकदेशंवा ग्राहयन् किञ्च अमृतंसंप्रयच्छन् अमृतत्वस्य देवजन्मनो मोक्षस्यवा प्रापकत्वादमृतंवेदार्थः तस्यप्रदानंकुर्वन् तन्तादृशमाचार्यं शिष्यो मातापितरौ मन्येत मुख्यमातापितृरूपं मन्येत पूर्वसिद्धौतु मातापितरावधमस्य मनुष्यशरीरस्य प्रदानादमुख्यौ तथाचमनुः, उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ॥ ब्रह्मजन्माहिविप्रस्य प्रेत्यचेहचशाश्वतमिति, तस्मैमुख्यमातापितृरूपायाचार्यायनद्रुह्येत् तदपकारंनकुर्यात् अह पूजितोयमर्थोन्यत्रापि' इत्यर्थः, कतमदिति लुप्तसप्तम्यन्तं चनेतिनिपातोऽप्यर्थे अहेतिपूजायाम् ॥ २ ॥ शिष्यस्यगुर्वनिष्टाचरणंद्वितीयेननिषिद्ध्यतृतीयेनतदाचरणेतस्यानिष्टमाह ( अध्यापिताइति ) येत्वधमाः शिष्या गुरुणाध्यापिताःसन्तो वाचा मनसाकर्मणावा विनयोक्त्या तदीयहितचिन्तनेन शुश्रूषयावा गुरुं न आद्रियन्ते नसत्कु

ब्रह्मानन्दैकमूर्तिं स्मितमुखकमला मिन्दु सूर्य्याग्निनेत्रां ।
ब्रह्माण्डानामधीशां श्रुतिनुतविभवां ब्रह्मविद्याधिदेवीं ॥
आद्यांपाशाङ्कुशाढ्या मभयवरकरां दाडिमीपुष्पकान्तिं ।
चिच्छक्तिंचन्द्रमौलिं हृदयकमलगां चिन्तयेमोक्षलक्ष्मीं ॥ १ ॥

वन्ति आदररहितास्ते शिष्याभासाः गुरोर्गुरुणा यथानभोजनीयाः पालनयोग्या न भवन्ति नहितेषु गुरुःकृपांकरोति तथैवतान् अधमान् शिष्यान् ततश्रुतं गुरूपदिष्टवेदवाक्यं नभुनक्ति नपालयति श्रुतफलेन नसंयुनक्तीत्यर्थः, गुर्वादररहितस्याधीतन्निष्फलमितिभावः ॥ ३ ॥ अथनिषेधमुखेनप्रथममन्त्रेणोक्तमपिपाठनाधिकारिणंस्पष्टतयास्फुटप्रतिपत्तयेविधिमुखेनाहचतुर्थेनमन्त्रेण ( यमेवेति ) हे ब्रह्मन् हे आचार्य त्वं यमेवमुख्यशिष्यं शुचिं मातापितृवंशशुद्धिं मृदादिकृतवाह्यशुद्धिं अकौटिल्याद्याभ्यन्तरशुद्धियुक्तं अप्रमत्तं गुरूक्तिश्रवणे गुरूक्तशास्त्रोक्तार्थानुष्ठानेच सावधानं मेधाविनं श्रुतार्थाविस्मृतिशालिबुद्धिमन्तं ब्रह्मचर्येण ब्रह्मचारिणमुद्दिश्यश्रुतिस्मृत्युक्तेन धर्मेणोपपन्नं युक्तं विद्याः जानासि विद्ज्ञाने व्यत्ययेनलिङ् किञ्च यः मुख्यशिष्यस्ते तुभ्यं कतमच्चन कदापि सर्वास्वप्यापत्सु नद्रुह्येत् नापकुर्यात् अह पूजायां निधिपाय सकलपुरुषार्थहेतुत्वाद्वेदएवांनिधिस्तं पाति अनधिकारिणेऽपाठनाद्रक्षति तस्मै मुख्यशिष्याय मां वेदरूपां विद्यांब्रुयाः कथयेत्यर्थः,इत्थंविद्यादेवतया प्रार्थितत्त्वात् आचार्येण यथोक्ताधिकारिणेएव विद्योपदेष्टव्या नान्यस्मै इतिनिष्कर्षः ॥ मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानिचशास्त्राणि प्रथन्ते वीरपुरुषकाणिच भवन्त्यायुष्मत्पुरुषकाणिचेति भगवत्पतंजलिवचनाद्ग्रन्थान्ते मङ्गलमाचरति ( ब्रह्मानन्देति ) ब्रह्मस्वरूपभूतो यआनन्दः सएवैकामूर्त्तिर्विग्रहोयस्यास्तां "शिवानस्तनुवाशन्तमयेत्यादिश्रुतेः, स्मितंईषद्धासवन्मुखकमलं कमलसदृशंमुखंयस्यास्तां, इन्दुसूर्य्याग्नयोनेत्राणि यस्यास्तां तादृशनेत्रत्वंचास्यास्तेषांएतन्नेत्रकार्य्यत्वमस्याविराड्रूपत्वं तत्सदृशकान्तिमत्त्वंवाभिप्रेत्योक्तं, ब्रह्माण्डानामनेकेषामधीशांनियन्त्रीं, श्रुतिनुतविभवां उपनिषत्स्तुतमाहात्म्यां, आद्यामखिलजगत्कारणभूतां, पाशांकुशाढ्यां ऊर्ध्वयोर्दक्षवामहस्तयोः क्रमेण पाशेनांकुशेनचयुतां, अभयवरकरां अधोगतदक्षिणवामहस्तयोःक्रमेणाभयवरौतन्मुद्रेयस्यास्तां, तल्लक्षणंतु अधोमुखीकृतःप्रसृतोहस्तोवरमुद्रा, ऊर्ध्वीकृतःप्रसृतोहस्तोऽभयमुद्रा,इति, पाशांकुशाभयवरदशब्दार्थ उक्तस्सारसंग्रहे; धातूद्वौस्तोरक्षणव्यापकार्थौ पाद्योऽश्वाद्यस्तत्प्रभावास्तयोश्च ॥ सर्वसंरक्ष्याथसर्वात्मनायो व्याप्नोत्यंशः स्यादसौपाशवाची ॥ अंस्यादात्माकुर्धराकुस्तनुर्वा भागार्थस्याच्छोथवाऽवृत्तिवाची ॥ भूश्चेद्भूतान्यन्यथाचेच्छरीराण्या

वन्देपादारविन्दंभवभयविनुदंमंजुमंजीरनादं सर्वाद्यंसर्वनिष्ठंसक लगुणनिधिंसच्चिदानन्दरूपं ॥ मायाबीजाधिदैवंसकलमनुतनुंपंच देवाधिरूढं ब्रह्मद्वाराब्जसंस्थंस्रवदमृतरसंदेवदेव्याःशिवायाः ॥२॥

कृप्यान्यान्याहरेदङ्कुशाख्यः ॥ स्मृतेयथासंसृतिचक्रचंक्रमोद्भवाद्धनापायसमुत्थि तादपि ॥ वियोजयत्याश्मतनुंनरंभयात्तथाभयस्याभयसंज्ञताविभोः॥ मुख्यार्थवाची वरशब्द उक्तःस्याद्वाच्छितार्थश्चवराभिधानः॥ मुख्यंत्वभीष्टंस्मृतिमात्रकेणददातियो सौवरदोवगम्यइति, दाडिमीपुष्पस्येवकान्तिर्यस्यास्तां, चिच्छक्तिंस्वप्रकाशरूपां; चन्द्रोमौलौचूडायांयस्यास्तां, हृदयेयत्कमलंतद्गतांतत्रध्यायमानां, मोक्षलक्ष्मींमो क्षएवलक्ष्मीःप्रसादेदेयंयस्यास्तां, ब्रह्मविद्याधिदेवींब्रह्मविद्याअहंब्रह्मास्मीत्यखण्डा काराकारितान्तःकरणवृत्तिःतस्याअधिदेवींअधिउपरिष्टाचदवच्छिन्नतया तदधिष्ठा नतयाच द्योतमानां परब्रह्मरूपामित्यर्थः, "पादोस्यसर्वाभूतानि त्रिपादस्यामृतं दिवीतिश्रुतेः, परस्यब्रह्मणः स्त्रीलिङ्गशब्देनव्यवहारः "सेयंदेवतैक्षत, "त्वंवाअ हमस्मिभगवोदेवते अहंवैत्वमसिदेवते, इत्यादिश्रुतिप्रसिद्धः, एवमुक्तविशेषणमहि म्नाप्रत्यायितां श्रीभुवनेश्वरींचिंतये ध्यायामि चितिस्मृत्यांचौरादिकः ॥ १ ॥ मंग लबाहुल्यायपुनः श्रीभुवनेश्वरीपादमभिवन्दते ( वन्दइति ) भवाज्जन्मनोयद्भयं तद्विनुदतिअपहरतीतिभवभयविनुत् तत् णुदप्रेरणेक्विप् मंजुर्मनोहरोमंजीरस्यपाद भूषणस्यनादः शब्दोयस्मिंस्तत् यद्वा मंजुमंजीरस्यनादइवनादोनिष्पत्तिभूमिकाग तानाहतध्वनिरूपोयस्यतत् सर्वस्यकार्यजातस्याद्यंप्रथमं अतएवसर्वेषांब्रह्मादी नामुपास्यत्वान्निष्ठास्थितिर्यस्मिंस्तत् सकलगुणानिधिं ऐश्वर्य्यादिगुणाधारं सच्चि दानन्दरूपं चिद्रूपत्वात् मायाबीजस्याधिदैवं वाच्यंलक्ष्यंच सकलमनुतनुं सक लामनवोमन्त्राः वाच्यवाचकभावेन सर्वमन्त्रवर्णानुस्यूतचैतन्यरूपेणवातनुःशरीरंय स्यतत् पंचदेवाधिरूढं पंचसंख्याकान्देवानधिरूढं तथाचोक्तंरुद्रयामले ब्रह्माविं ष्णुश्चरुद्रश्च ईश्वरश्चसदाशिवः॥ एतेपंचमहाप्रेताःपादमूलेव्यवस्थिताः ॥ चत्वारो मंचचरणाःपंचमःप्रच्छदःपटः ॥ सच्चित्प्रकाशरूपेणाशिवेनाभिन्नविग्रहः ॥ तत्रा सनेसमासीना निर्भरानन्दरूपिणीति, संगृहीतश्चायमर्थस्सौंदर्य्यलहर्य्यांभगवता भाष्यकृता गतास्तेमंचत्वंद्रुहिणहरिरुद्रेश्वरभृतः शिवस्स्वच्छच्छायाघटितकपट प्रच्छदपटः । त्वदीयानांभासांप्रतिफलनलाभारुणतया शरीरीशृंगारोरसइवदृशां दोग्धिकुतुकमिति, ब्रह्मद्वाराब्जसंस्थं ब्रह्मद्वारंब्रह्मावातिसाधनत्वात्तद्वाख्यंयदब्जं शिरोगतं यद्वा ब्रह्मद्वारेब्रह्मरन्ध्रेस्थितंयदब्जंसहस्रारंकमलं तत्रसंस्थास्थितिर्यस्यत त् स्रवन्स्यन्दमानः अमृतरसोयस्मात्तत् तदुक्तंसौंदर्य्यलहर्य्यां सुधाधारासारैश्चर

त्वत्पादपद्मस्मरणान्महेशिह्यद्वैतमार्तण्डइहाविरासीत् ॥ तस्माद यन्तेचरणारविंदे मंजीररूपेणसमर्पितोस्ति ॥ ३ ॥ योजातोद्रविडेषुविप्रमहितेपेरुङ्कुलाख्येमहा ग्रामेश्रीमतिपालघाटनगरासन्नेबुधाच्छङ्करात् ॥ आख्याभूतसहस्रनामपदभाक्पार्वत्यभिख्यप्रसू सूनुर्वेदमधीतवान्सानियमं श्रीवैद्यलिङ्गादगुरोः ॥ ४ ॥

णयुगलान्तर्विगलितैःप्रपंचांसिंचंतीति, देवदेव्याःदेवानामपिदेवीपूज्यातस्याःशिवायाःमंगलरूपायाःश्रीभुवनेश्वर्याः पादारविंदं अरविंदसदृशंपादंचरणंवन्दे प्रणौमि अहमित्यध्याहार्य्यम् ॥ २ ॥ यत्करोषियदश्नासि यज्जुहोपिददासियत् ॥ यत्तपस्यसिकौन्तेय तत्कुरुष्वमदर्प्पणमितिभगवद्गीतावाक्यमनुसन्दधानःस्वग्रन्थेमंजीरत्वमारोप्य तांस्वेष्टदेवतापादयोरर्प्पयति ( त्वत्पादेति ) हेमहेशि निरतिशयैश्वर्य्यशालिनि यस्मादयमद्वैतमार्त्तण्डाख्यो ग्रन्थस्त्वच्चरणस्मरणबलेनैव इह मनसि वाचिवा आविरासीत् व्यक्तः मयाकृतइत्यनुक्त्वा आविरासीदित्युक्त्या स्वस्वैतत्करणे अनायासः अनादिसिद्धार्थप्रतिपादकत्वं निर्दोषत्वं चोक्तं भवति, तस्मात्तेचरणारविन्दे मंजीररूपेण समर्प्पितोस्ति ग्रन्थान्ते अस्तीति शब्देन सत्ताख्यपरब्रह्मणः स्मरणमनुष्ठितमिति भावः ॥ ३ ॥ ( योजातइति ) यद्यपि द्रविडदेशीयपेरुंकुलशब्दे ककारोत्तरमर्द्धओकारउच्चार्यते तथापि तस्य महाभाष्यकृता ओङसूत्रे निराकृतत्वात् अपिमाषंमषंकुर्याच्छन्दोभङ्गंनकारयेदित्यभियुक्तोक्तेश्च उकारउपात्तइतिबोध्यम्,आख्याशब्दोनामवाची आख्याभूतंस्वनामधेयभूतंयत्सहस्रसामेतिपदंतद्भजतितद्वाच्योभवतीत्याख्याभूतसहस्रनामपदभाक् पार्वतीत्यभिख्यानामधेयंयस्याईदृशीयाप्रसूर्ज्जननीतस्याः सूनुः पुत्रः अभिख्यानामशोभयोरित्यमरः,आत्मजस्तनयस्सूनुस्सुतःपुत्रइतिचामरः,अयमस्यवंशक्रमः ॥ श्रीरङ्गनाथसविधे त्रिप्पलातुरसंज्ञके ॥ नगरेऽखण्डकावेरी सङ्गिमारुतशालिले ॥ १ ॥ ॥ पुरासीद्विदुषांमान्यः शास्त्रीसाम्बशिवाभिधः॥ अधीत्यविधिवद्वेदान्पुत्रानुत्पाद्यधर्मतः ॥ २ ॥ इष्ट्वाचशक्तितोयज्ञैर्मनोमोक्षेनिवेशयेत् ॥ इत्युक्तिमानवींधीमान् सोऽनुसृत्ययथाक्रमं ॥ ३ ॥ संन्यासाश्रममाश्रित्य ब्रह्मीभूतोबभूवह ॥ शिवशंकरसुब्रह्मण्यशास्त्रीतत्सुतस्ततः ॥ ४ ॥ पेरुंकोलाभिधग्रामवासिभिर्द्विजपुंगवैः ॥ सम्मानपूर्वमानीयस्वग्रामेविनिवेशितः ॥ ५ ॥ तत्रसुब्रह्मण्यशास्त्रिनामातस्यसुतोभवत् ॥ चत्वारस्तनयास्तस्यवेदशास्त्रविदोऽभवत् ॥ ६ ॥ ज्येष्ठःशंकरशास्त्र्यासीदैग्याशास्त्रीततःपरः ॥ कृष्णशास्त्रीततोरामशास्त्रीतिविदिताभिधाः ॥ ७ ॥ तेषुज्येष्ठस्यतनयास्त्रयआसन्गुणोज्वलाः ॥ आद्यः

श्रीरामानंदनाथाभिधगुरुकरुणाप्राप्तदीक्षोथलब्ध्वा श्रीमुद्दुस्वामिपादाम्बुजपरिचरणाद्योगवेदान्तबोधं॥ विज्ञातब्रह्मतत्वान्निरुपमधिषणात्सर्वतन्त्रस्वतन्त्राद्वेदान्तेपुष्ठिनाप्तोत्परमगुरुवरात्यागराजान्मखीन्द्रात्॥५॥ सोयंपूर्वजनिप्रशस्तसुकृतात्प्राप्तोविरक्तिंपरामाश्रित्याश्रमनन्त्यमुत्तमतमांतीर्थावलिंपर्य्यटन् ॥ वासंकुत्रचिदब्दमाग्रहवशात्कुर्वन्स्वधर्माश्रिताम्मासंकुत्रचिदेवमेवकुरुतेप्रारब्धकर्मक्षयं॥६॥ खण्डाःपंचहिमालयस्यविदितानेपालकूर्म्माचलौकेदारोथजलन्धरोथरुचिरःकश्मीरसंज्ञोन्तिमः॥ तेष्वाद्येपशुपत्यभिख्यगिरिशस्थानात्तमाहात्म्यके खण्डेक्षत्रियवंशराज्यमहितोनेपालदेशोस्तियः॥७॥

सुब्रह्मण्यशास्त्र्यनन्तसुब्बाभिधोन्तिमः ॥ ८ ॥ सहस्रनामसंज्ञोसौमध्यमोवेदशास्त्रवित् ॥ कृत्वागुरुगृहेवासंस्वपितुःप्रपितामहं ॥ ८ ॥ अनुकुर्वन्नेकदण्डिसंन्यासाश्रममावहन् ॥ श्रीब्रह्मानन्दतीर्थाख्यामन्वर्थामाश्रयत्कृती ॥ १० ॥ इति ॥ श्रीवैद्यलिंगनामकाच्छोत्रियाज्जटावल्लभादध्यगीष्ट ॥ ४ ॥ ( श्रीरामेति ) श्रीमुद्दुस्वामी आम्रावतीसरित्तीरस्थकारत्तूर्ग्रामवासी गणपतिदीक्षितेत्यपरनामा सोमयाजी योगराट् ब्रह्मनिष्टो विद्वच्छिरोमणिः ॥ अनेनास्य "श्रोत्रियंब्रह्मनिष्ठमितिवैदिकंगुरुलक्षणमुपपन्नंभवति, ( विज्ञातेति ) विज्ञातंसाक्षात्कृतंब्रह्मतत्वंयेनतस्मात् ॥ अनेनास्यश्रौतंब्रह्मनिष्ठत्वंगुरुलक्षणमुक्तंभवति, परमगुरुवरात् श्रीमुद्दुस्वामिशास्त्रिणोगुरुवरात् श्रीत्यागराजदीक्षितात् अस्य श्रीमहामहोपाध्यायश्रीराजुशास्त्रीतिप्रसिद्धंनाम वासस्थानन्तु चम्पकारण्यनामा मन्नारकोविलइतिप्रसिद्धम्, इदानीमप्ययंताम्भूमिमलङ्करोति परिमलन्यायरक्षामणिकुवलयानन्दादिचतुरधिकशतप्रबन्धनिर्म्मातुः श्रीमदप्पय्यदीक्षितस्यवंश्यः ततोनवमःपुरुषःमखीन्द्रात् मखिनोमखकर्त्तारःतेषुश्रेष्ठात् अनेनास्यवैदिकं श्रोत्रियत्वंगुरुलक्षणमुक्तंभवति, वेदत्रयीपारगामित्वंचास्यप्रसिद्धम् ॥ ५ ॥ ( सोयमिति ) स उक्तविशेषणोयंग्रन्थकृत् पूर्वायाजनिर्जन्मतत्सम्बंधियत्प्रशस्तंश्रेष्ठंसुकृतंपुण्यंतस्मात् परांविरक्तिं वासनानुदयेभोगेवैराग्यस्यतदावधिरित्युक्तलक्षणं वैराग्यं प्राप्तःसन् अन्त्यं चतुर्ष्वाश्रमेष्वन्तिममाश्रमं संन्यासमाश्रित्य उत्तमतमां अतिशयेनोत्तमां तीर्थानामावलिंसमूहं अकर्मकधातुभिर्योगेइति द्वितीया पर्यटन् परिभ्रमन् स्वधर्माश्रितां स्वस्ववर्णाश्रमोचितंधर्म्मंश्रयन्तिसेवन्तेयेतेषांपुंसां श्रिञ्सेवायांक्विप् ह्रस्वस्यपितीतितुक् आग्रहवशात् प्रार्थनातिशयाद्धेतोः कुत्रचिदब्दंवत्सरं कुत्रचिन्मासं कुत्रचिदर्धमासं एवमेव एवंप्रकारेण वासंकुर्वन् प्रारब्धकर्मणामुपभोगेन क्षयंनाशंकुरुते ॥ ६ ॥ ( खण्डाइति ) तेषुपंचसुखण्डेषुआद्येखण्डे नेपालाख्ये ॥ ७ ॥

तत्रप्राग्र्यादेवलोकाभिधाना पुरस्त्यंकोदीचिपस्याःप्रदेशे ॥ अस्तिस्थानानांत्रयीश्रीभवान्या मूर्द्धानाभिःपादुकाचेतिनाम्नी ॥८॥ तत्राद्यायाज्वलतिशिरसोदेशआश्चर्य्यमूर्त्तिर्ज्वालारूपाकरदलमितानित्यमन्यानपेक्षा ॥ नाभिस्थानेपुनरुरुतरापूर्वमूर्त्तेः पदोस्तु स्थानेज्वालाद्वयमुदयतेसार्द्धमद्भिर्धरित्र्याः ॥ ९ ॥ एतत्स्थानदिदृक्षयैषसहितोगौडेनविद्यार्थिना प्राप्यामूंपुरमाकलय्यमुदितःस्थानत्रयींयोगवित् ॥ थापाकेसरिसिंहवर्म्मविदुषाभूयोर्थितस्तद्वने अ.स्त्रौंक्यांश्चिद्दुवा.संकामममनघस्तत्स्थानमाहात्म्यदृक् ॥ १० ॥

( तत्रप्राग्र्येति ) तत्रनेपालदेशे प्राग्र्याश्रेष्ठा देवलोकाभिधाना देवलोक इति अभिधानंनामयस्याःसा एकामुख्या तत्वंचदेवतानांराजाधिकारिणांचसान्निध्यात् सर्वसमृद्धिशालित्वाच्च, एकेमुख्यान्यकेवलाइत्यमरः,अधुनाइयंनगरी देवलोकशब्दस्यापभ्रंशेन देलकशब्देनलोकैर्भाष्यते,यस्याःपुरः उदीचिप्रदेशे उत्तरभागे मूर्धा नाभिः पादुका इतिनामानियस्याईदृशी श्रीभवान्या दुर्गायाः स्थानानां त्रयी अस्ति त्रीणिस्थानानि विद्यन्ते ॥ ८ ॥ ( तत्राद्याइति ) तस्यांस्थानत्रय्यां शिरसोमूर्ध्नः देशे श्रीस्थानत्वेनप्रसिद्धस्थाने करस्यचतुर्विंशत्यंगुलमानस्य हस्तस्ययद्दलमर्द्धंवितस्त्यात्मकंतेनमितापरिच्छिन्ना अन्यस्याग्निज्वालाया इव काष्ठघृतादिसाधनस्यनास्त्यपेक्षाकाङ्क्षायस्याःस्वस्थितासा ज्वालारूपंयस्याःसा आद्यायाःदुर्गाया आश्चर्य्यमूर्त्तिराश्चर्य्यजनिकामूर्त्तिर्विग्रहो [illegible] निसंसदा ज्वलतिदीप्यते, नाभिस्थानेपुनः नाभिस्थानाख्येतु पूर्वमूर्त्तेरुरुतराअधिकोन्नतिविस्तारायामा ज्वालारूपामूर्त्तिरस्ति, पदोः पादयोः पादुकाख्येस्थाने धरित्र्या भूमेःसकाशादद्भिःसार्धं जलैःसह ज्वालाद्वयमुदयते द्वेज्वाले उद्गच्छतः ॥ ९ ॥ ( एतत्स्थानेति ) अनघः आत्मज्ञानाग्निदग्धकिल्विषःएषःपूर्वंतीर्थपर्य्यटनकर्तृत्वेननिर्दिष्टोग्रन्थकारः एतेषां दुर्गास्थानानांदिदृक्षयादर्शनेच्छयाहेतुभूतया विद्यार्थिना मुमुक्षुत्वादात्मविद्यामभिलष्यता गौडेन तज्जातीयेन श्रीगणेशानंदब्रह्मचारिनामकेन सहामूं पुरं देवलोकाभिधानांनगरीं प्राप्य स्थानत्रयीमाकलय्य दृष्ट्वा मुदितोहृष्टः थापाइत्युपाख्योयः केसरिसिंहवर्म्मा तदाख्योविद्वान् अयंनिखिलप्रधानजनप्रमाणनीयःप्रधानपुरुषःकमाण्डरकर्नैलइति राजदत्तोपाधिधारी क्षत्रियोब्रह्मण्यः प्रतापी यस्यसुतौद्वौ प्रेमशमशेरकेदारशमशेराख्यौ कप्तानोपनामधारिणौ धार्मिकौ अस्ययावत्तत्स्थानवासमेतस्य सेवातत्परावास्तां तेनकेसरिसिंहेन "तस्मादात्मज्ञंह्यर्चयेद्भूतिकाम इतिमुण्डकश्रुत्यर्थंजानता भूयोर्थितःअति

तत्रस्थितोयमनघां सरलांच वाच
मालम्ब्यमोक्षपथकांक्षिजनोत्सवाय ॥
सर्वार्थसङ्ग्रहममुं व्यदधादमुष्य
रक्षाविधावधिकृताःकृतिनःकृपाढ्याः ॥ ११ ॥
व्योमवाणनवचन्द्रसम्मिते १९५०वत्सरेमिथुनराशिगेरवौ ॥
कृष्णपक्ष इयमार्किवासरे पूर्णतांगतवती सतीकृतिः ॥ १२ ॥

इतिश्रीपरमहंसपरिव्राजकाचार्य्यश्री
ब्रह्मानन्दतीर्थविरचितोयमद्वैत
मार्त्तण्डःसम्पूर्णः ॥

---

शयेनब्रहुप्रार्थितःसन् भूयइतीयसुन्नन्तं क्रियाविशेषणं वहोर्लोपोभूचब्रहोरिति वहोर्भूरादेशईयसईकारलोपश्च तस्यकेसरिसिंहस्य वने उपवने कानिचिदहानि वासंनिवासमकार्षीत् वासेहेत्वन्तरमाह ( तत्स्थानमाहात्म्यदृक् ) तस्याःदुर्गायाः स्थानस्य माहात्म्यं महत्वं महाफलत्वमितियावत् तद्दृक् तज्ज्ञः ॥ १० ॥ ( तत्र स्थितइति ) तत्र देलकाख्यनगरे ॥ ११ ॥ ( व्योमवाणेति ) व्योमशून्यंवाण पंचचन्द्रएकस्तेनपंचाशदधिकैकोनविंशतितमेब्दे ( १९५० ) इत्यर्थः ॥ १२ ॥

शरीरसम्बन्धनिवन्धनोयं क्लेशस्तमुन्मूलयितुंविवेकी ॥
अद्वैतमार्त्तण्डममुंगुरुभ्योलब्ध्वातरेदित्यनवद्यमेतत् ॥ १ ॥
श्रीब्रह्मानन्दतीर्थाख्यद्राविडस्वामिनांमुदे ॥
इमांगङ्गाधरस्तेषांसाहाय्याद्विवृतिं व्यधात् ॥ २ ॥
यस्यगोकुलचन्द्राख्यस्तातोविद्वन्नृपार्चितः ॥
श्रुतिव्याकृतिगोऽभ्यासोभ्रातातु जगदीश्वरः ॥ ३ ॥
शरवाणग्रहेंद्वब्देवैक्रमेभौमवासरे ॥
मार्गशीर्षेशुक्लपक्षेग्रन्थोयम्पूर्णतामगात् ॥ ४ ॥

इतिश्रीमहाराजमान्यसाङ्गवेदषट्दर्शनाध्यापक
श्रीगोकुलचन्द्रसूरिसूनुनाश्रीगङ्गाधरशास्त्रि
णाप्रणीतेयमद्वैतमार्तण्डगतश्रुतिस्मृ
त्याद्यर्थप्रकाशिकामार्तण्डमयू
खावलिःसम्पूर्णा ॥

ब्रह्मार्पणमस्तु

| पृ० | प० | अशुद्ध० | शुद्ध० | पृ० | प० | अशुद्ध० | शुद्ध० |
|---|---|---|---|---|---|---|---|
| १ | ११ | साचाश्रु | साचाःश्रु | १७ | १२ | कर्यां | कार्या |
| १ | २२ | एकश्र | एकःश्र | १७ | २५ | बचनं | वचनं |
| २ | २० | ताया | तायाः | १८ | १८ | ज्ञोनना | ज्ञानेन |
| २ | १५ | न्मूकेति | न्मुकेति | १९ | ४ | परस्यरा | परम्परा |
| २ | २४ | तारणी | तारिणी | १९ | १४ | ताध्यासः | ताद्यध्यासः |
| २ | २५ | नाराण | नारायण | २० | ११ | द्दष्टः | दष्टः |
| २ | २५ | बहयो | बहवो | २४ | १ | नियर्न | नियतं |
| २ | २६ | स्वस्ठयंज | स्वरव्यंज | २५ | ३ | भुमा | भूमा |
| २ | २७ | लनने | लनेन | २५ | ४ | ज्ञानग्ने | ज्ञानाग्नि |
| २ | २८ | स्वात्माना | स्वात्मना | २६ | १७ | विधाया | विधया |
| २ | २९ | स्माच्छोक | स्मात्श्लोक | २६ | ३० | भगदु | भगवदु |
| २ | ३० | यस्येष्ठ | यस्येष्ट | २८ | १४ | मन्यते | मन्यते |
| ३ | २७ | स्मेमि | स्मेति | ३० | ९ | त्ययाने | त्ययौ न |
| ५ | २१ | भावोक्त | भावेक्तः | ३१ | ११ | शङ्का | शङ्कां |
| ६ | १६ | स्वकार | स्वाकार | ३३ | ६ | कानम | कानाम |
| ६ | २१ | स्योनम्ते | स्योनन्ते | ३५ | ८ | मपदि | मुपदि |
| ६ | २९ | स्यर्थः | स्यार्थः | ३५ | ९ | पीहत | पहितं |
| ७ | २६ | स्पःष्ठा | स्पष्टा | ३५ | ९ | तत्रयं | तन्नयं |
| ८ | ११ | दम्रो | दाम्रो | ३५ | १३ | तत्रयं | तङ्यं |
| ९ | ३ | रम्ना | राम्ना | ३६ | ३ | तत्रत | तन्नतु |
| ११ | ११ | यथा | यया | ३६ | २६ | भावात् | भवात् |
| ११ | २१ | तदेव | तदेव | ३८ | २४ | ष्क्रूलामि | ष्कल्मि |
| १२ | २४ | रिर | रीर | ४१ | १२ | अतान्य | अतोन्य |
| १२ | १६ | नत्वेवं | नन्वेवं | ४१ | १३ | मुडक | मुंडक |
| १२ | ३० | दैवता | देवता | ४१ | १६ | मुडक | मुंडक |
| १४ | ४ | न्मरू | न्मरु | ४३ | २४ | रतःवा | रतवा |
| १४ | ५ | रैखा | रेखा | ४४ | १६ | योरक | योरेक |
| १५ | २ | वविद्यते | विद्यते | ४४ | २७ | मात्मन | मात्मान |
| १५ | ५ | (नचेति) | ( उचेति ) | ४६ | १२ | दीना | दीनां |
| १५ | ८ | त्प्रप्तां | त्प्राप्तां | ४९ | १८ | श्रेतिल्या | श्रेत्या |
| १५ | १५ | उदाक्त | उदक्त | ५१ | १२ | दिति | दिश्रुति |
| १५ | २५ | रूप्यने | रूप्यते | ५२ | ७ | तपिन्या | तापिन्या |
| १६ | १ | शुक्ष | शुक्ष | ५३ | १० | यदोय | यदीयं |
| १६ | १० | ज्ञानत्मा | ज्ञानात्मा | ५३ | २१ | चिस्सा | चिकित्सा |
| १६ | १६ | अत्म | आत्म | ५४ | १ | तिङ्गी | तिर्ङ्गी |

| पृ० | पं० | अशुद्ध० | शुद्ध० | पृ० | पं० | अशुद्ध० | शुद्ध० |
|---|---|---|---|---|---|---|---|
| ५४ | ३ | मत्पद्य | मुत्पद्य | ९१ | २५ | स्यैक | ङ्येक |
| ५५ | १० | निर्द्धर्मि | निर्द्धर्मं | ९९ | १० | ग्रन्थायो | ग्रन्थयो |
| ५५ | २५ | मरुः | मेरुः | ९९ | १९ | पमां | परमां |
| ६२ | २५ | सूपं | रूपं | १०० | २२ | तद्योग | तद्योग्य |
| ६३ | २७ | स्त्तववत्त्व | स्तवत्व | १०४ | १९ | यिच | पिच |
| ६४ | २५ | सुखिन् | सुखिनः | १०६ | २९ | स्फुरति | नस्फुरति |
| ६४ | २६ | प्रञ्ये | प्रसज्ये | १०८ | १८ | करण | कारण |
| ६५ | ६ | श्रति | श्रुति | १११ | १५ | पूवक | पूर्वक |
| ६५ | १० | वद्रष्ट | वद्दृष्ट | १११ | १७ | रध्रे | रन्ध्रे |
| ६५ | २८ | (द्रष्टुरि) | ( द्रष्टुरि ) | १११ | २० | शब्द | शब्दा |
| ६५ | २९ | कुटस्थ | कूटस्थ | १११ | २४ | रध्र | रन्ध्र |
| ६७ | ४ | रूणी | रूपिणी | १११ | २७ | वाभ्यां | नाभ्यां |
| ६७ | ६ | विष्ण्या | विष्णवा | १११ | २८ | मुमुक्ष | मुमुक्षु |
| ६८ | २ | शाक्तनां | शाक्तानां | ११४ | ३१ | निर्गण | निर्गुण |
| ६८ | १० | वद्वैत | वद्द्वैत | ११५ | ८ | काया | कायां |
| ६८ | १५ | कृताते | कृतांत | ११५ | १९ | समाधे | समाधि |
| ६८ | २२ | मोज्ञ | मोक्ष | ११५ | २१ | पयाय | पर्याय |
| ६८ | २३ | देहलं | देहसं | ११७ | २२ | वावे | वामं |
| ६८ | २४ | क्काश | काकाश | ११९ | १२ | तिस्त | तिविस्त |
| ७२ | १६ | ततस्त्र | ततःस्त्र | ११९ | २५ | आराः | अराः |
| ७२ | १९ | वन्नदी | व न्नादी | ११९ | २८ | मंध्ये | र्मध्ये |
| ७३ | १६ | प्रवि | प्रतिवि | १२० | २५ | वाह्य | वाह्ये |
| ७७ | ७ | सोपादा | स्वोपादा | १२० | २८ | छक्ते | च्छक्तेः |
| ८२ | १२ | मत्म | मात्म | १२१ | ८ | पीता | पिता |
| ८३ | १ | रणत्प | रणात्पं | १२५ | २७ | श्वेतोसि | श्वेतासि |
| ८७ | १३ | मोन्नास्ती | मोनास्ती | १२५ | ३१ | रूपस्य | रूपस्य |
| ८४ | १४ | दिदि | दिति | १३४ | १७ | नद | नाद |
| ८८ | १६ | धिनां | धीनां | १३५ | ४ | दुखाणर्वा | दुःखार्णवा |
| ८९ | ५ | जातिय | जातीय | १३५ | १८ | दुख | दुःख |
| ८९ | १४ | ध्यये | ध्याये | १३५ | १८ | दुख | दुःख |
| ८९ | १९ | वं | त्वं | १३७ | १ | मूख | मुख |
| ८९ | २३ | मत | मतं | १३७ | १९ | वत्पं | वत्प |
| ९१ | २ | हर्दिन्द्र | हृदीन्द्रि | १३७ | १५ | त्काण | त्कारण |
| ९१ | ५ | याश्रु | याःश्रु | १३९ | १९ | स्त्रसा | स्त्रना |
| ९१ | २१ | न्पाडित | न्पण्डित | १३९ | २९ | वतू | वनू |